B2



॥ श्रीशः शरणम् ॥

# मधुरवाणी

संस्कृतमासपत्रिका

प्रधान सम्पादकः
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः
पं. धुर्लीश्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

सहसम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः
सं. सा. सुधाकरः

---

वार्षिकं मूल्यम् रूप्यकचतुष्टयम्

भा
भवत् ।
न् सेहे ।
श्रम्य प्रयत्य
भिन्देज्जगति ।

## अनुक्रमणिका



येषां ग्राहकाणां सकाशात् मूल्यं वार्षिकं न प्राप्तं तेषां तेषां सन्निधौ ...ङ्कः व्ही. पी. द्वारा प्रेष्यते कार्यालयतः। ते ते महाभागा अविलंबेन ...ं दत्वा विमोच्य तदंकं प्रोत्साहयंतु वत्साम वाणीम् इत्यभ्यर्थयामहे ! ... धनादेशद्वारा मूल्ये प्रेषिते महानुपकारो भवति चेत्सलम ।

संपादकः

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१२ वर्षे ] १८६९ शकस्य [ ५ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

---

## १५ आगष्टमासे
# स्वातंत्र्यलाभमहोत्सवः

एष किल दिवसो भारते स्वातंत्र्यलाभदिवस इति महोत्सवहेतुरमन्दानन्दनिदानमिति च पाल्यते सर्वत्रापि । बाला गीर्वाणवाणीसेवापरायणा मधुरवाणी अपि परमानन्दभरिता स्वातंत्र्यप्राप्तिनिमित्तेन । अ. भा. राष्ट्रीयमहासभा जन्मत आरभ्याद्ययावत् स्वातंत्र्यमर्जयितुमतिशयितं महान्तं क्लेशमन्वभवत् । कारागृहं निजावासमकल्पयत् । स्वशिरसि सहस्रशो यष्टिप्रहारान् सेहे । निरशनव्रतं कुत्सितमाहारमभ्यरोचयत् । एवं षष्ट्यधिकसंवत्सरं परिश्रम्य प्रयत्य स्वातंत्र्यग्रहणाय सिद्धां तां अ. भा. राष्ट्रीयसभां ( कांग्रेस ) को वा नाभिनन्देज्जगति ।

श्री. ना. गोखले—टिळक—नवरोजी—पं. मालवीय—बानर्जीप्रभृतयो महाभागा अंतिमश्वासविसर्जनं यावत् स्वातंत्र्यमंत्राक्षराण्युच्चरंतो नश्वरं देहमिमे पर्यत्यजन् ।

पंजाबुसिंहः श्रीमान् लजपतरायमहोदयः एवमन्ये च ते ते महाभागाः सर्वविधान् प्रयत्नाननुष्ठाय अलब्धमनोरथाः प्रजासु जागृतिमेव तात्कालिकं फलं मन्वाना राजापथ्यमनुभूय कीर्तिशेषा बभूवुः । परमिदानींतनेषु म. गांधीमहोदयः पं. नेहरू—सरदार पटेल—राजेंद्रबाबूप्रभृतयोपि पूर्वं राजापथ्यमनुभूयापि संप्रति सामन्तराज्यमनुप्राप्तं भोक्तुं संनद्धा अभूवन्निति सर्वथा धन्यवादार्हाः इति तान् समभिनन्दामस्तमां वयम् । परं प्रसंगेऽस्मिन् कुटिलराजनीतिप्रवीणानां प्रावीण्येन जिन्नामहोदयस्याग्रहानिनिवेशेन च पवित्रमखण्डं भारतं हिंदुस्थान पाकिस्थानविभागाभ्यां विभक्तं खण्डितमिति खण्डितहृदयाः स्म वयम् सर्वथा । ते चापि मुस्लिमा भारते एव जन्म प्राप्य प्राग् वंशपरंपरया वैदिकधर्मानुयायिनोपि मध्ये बलात्कारेण स्वसम्मत्या वा तैस्तैः प्रलोभनमिषैर्वा धर्मांतरमनुप्राप्ताः संतो वैदिकधर्मानुयायिनः शांतिप्रियान् अहिंसाप्रणयिनो भारतीयान् यद्द्वेषिणो मन्यंते तदेतदतिगर्हणीयं तिरस्करणीयं शोच्यं दूष्यं च विवेकवतामिति पशवोऽपि जानीयुः किं पुनर्मानवाः । तथापि केवलं हिंस्रतया परान् घातयंतो रोषपरवशैरपरैरात्मीयानपि घातयितुं सज्जंते न लज्जंते च । परमिमां घोरामशांतिमवलोक्य अखण्डत्वे भारतस्य श्रद्दधाना अपि खण्डनमश्रेयस्करं मन्यमाना अपि निरुपायतया पाकिस्थानाय सम्मतिं दत्वापि सामंतराज्यसूत्रग्रहणाय सिद्धा अभूवन् राष्ट्रसभानेतृप्रवरा इति विदितमेव सर्वेषाम् । परमेते भारतीया नेतृप्रवराः पुनरग्रतोऽपि वा यथा प्रजा अखिला अपि धर्मात्मानो भवेयुस्तथा प्रयत्य भयंकरां महर्घतां सर्वत्रापि भारते प्रसृतां दूरीकृत्य सुखमयीं शांतिं शाश्वतीमुत्पादयन्तु तथा धर्मविध्वंसनकारणान्युन्मूलयंतु तथा प्रयतंतामित्यर्थ्यर्थ्य संप्रति विरमामो वयम् ।

पुनरग्रिमेंके विषयमेनमधिकृत्य विवेचयामो विस्तरादित्यलम् ।

सम्पादकः

# साध्वी गौरी

श्री. बुर्लि श्रीनिवासाचार्यः मधुरवाणीसम्पादकः बेळगांव.

आसीदियं काऽपि ललना ललितांगयष्टिस्सुविशालचपलनयना चम्पकगौरवर्णमनोहरा गौरीनाम्नी प्रत्यासन्नत्रिंशवर्षदेशीया युवतिः । राकानिशाकरवदना सुमधुरमन्दहासविलासिनी समुत्फुल्लकपोलयुगला असकृत्सततमीक्ष्यमाणाऽपि दयितचक्षुषोरतृप्तिमुत्पादयतिस्म । श्रीमान् शंकरो नाम तद्दयितः समुल्लसितहृदयस्सर्वथा सर्वशोपि तदुचितो रूप–यौव्वन–मनोबुद्धिवैशद्यशोभितो विपुलं धनमर्जयन् मोहमयीति सुप्रसिद्धे मुम्बापुरे कस्मिंश्चिद्दिनपत्रकार्यालये सम्पादकमण्डलांतर्गतो लेखनकलाकुशलः कार्यमाचरतिस्म । तयोरनुरूप एवैकः शिशुरप्रतिमसुन्दरः पित्रोरमन्दमानन्दमुद्भावयन् गति–हास—विलासैरतितरां रमयतिस्म ।

मुम्बापुरे जातीयः कदनकोलाहलः सर्वानपि नितांतं भीषयतिस्म । यः कोऽपि यवनो हिन्दुर्वा कार्यार्थं बहिर्गतः सुखेन परापतिष्यतीति नासीन्नियमः । अविदिन एव येन केनापि निशितया च्छुरिकया मर्मसु प्रहृतस्सहसाक्रन्दन् मूर्च्छितः प्राणाँस्त्यजतिस्म । केचनार्धमार्गे चेत् अपरे तत्रतत्र चिकित्सालयं यापिताः प्राणानत्याक्षुः । अन्ये च बहवः कुशलमतिभिः पाश्चात्यवैद्यविद्याविशारदैरुपचारमनुप्राप्य प्राप्तदृढतरारोग्यभाग्यभाजः प्रत्यागत्य स्वमन्दिरं स्वीयान् बंधुजनानानंदयंतिस्म । सर्वकारीयाधिकारिणो जना अहर्निशं शांत्युत्पादनाय प्रयतमाना अपि न यशः समभ्यगच्छन् । क्वचित् क्वचित् संघशो जना एकीभूय दृढतरैः शिलाशकलैरभ्यवर्षन्नितरेषु । क्वचन क्रय्यवस्तुसमृद्धान्यापणानि लुण्टका उल्लुठंतिस्म । लुठित्वा स्वैरमग्निं प्रज्वाल्य दंदह्यमानानि भस्मसात्कुर्वंतिस्म निर्भयतया निर्दयास्संतः । रक्षापुरुषा अपि रक्षणकर्म अकुर्वाणा अपराधिनः अजानंतो निपराधानेव गृण्हन्तः कारागृहं प्रवेशयंतिस्म । प्रमुखाधिकारिणो गृहमंत्रिप्रभृतयः शांतिकर्मणि यशःसंपादनाय ज्ञातानशांतिकरान् मरणदण्डेनैव दण्डयाम इत्युदघोषयन्नपि । तथापि

समपेक्षिता शान्तिर्नोत्पादिता । एतेन च बहवः; प्रजाजना अपि शांतिरक्षणे शक्तिरेव नास्त्येतेषु मंत्रिवर्येषु अनर्हाः सर्वथा प्रभुत्वे एते इत्याद्यनेका गालीः दायंदायं नितरां दूषयंतिस्म । समयेऽस्मिन्नेतादृशे कार्यार्थं कार्यालयं गतेषु पत्यादिषु तदागदनं यावत् ललनानां दयितानां जनन्यादीनां च गृहगतानां चिन्तानिमग्नानां भयत्रस्तमनसां समयो न सुखेन यातिस्म ।

ईदृशेऽस्मिन् प्रसंगे प्रशस्तगौरवर्णा गौरी अपि स्वावसथे उपरितने चतुर्थचन्द्रशालास्थितं गवाक्षमेकमवलंब्य पत्यागमनमार्गं निरीक्षमाणा तदागमनं यावत् कालमतियापयतिस्म ।

तदानीं किल निशासमये विद्युद्दीपपंक्तिरुज्ज्वला प्रकाशयतिस्म तारागणमिव नभोंगणम् । रथ्यायां पतितं सूक्ष्ममपि वस्तु दृग्गोचरं भवतिस्म चक्षुष्मताम् । परमत्र जनानामसंचारः सर्वथा भीतिमुत्पादयतिस्म । यतोऽत्र नगरे मध्यरात्रावपि जनसंचारो बहुलतयैव दृष्टिगोचरो भवतिस्म । तस्मिन् महति राजधानीभूते नगरे रात्रौ न सर्वथा संचरितव्यं सर्वैरिति सर्वकारस्य बलवती आज्ञा प्रत्यबध्नाज्जनसंचारम् । गवाक्षनिक्षिप्तमुखी विशालाक्षी गौरी दूरतोऽपि वा समागच्छन् दृश्येत वा हृदयवल्लभः शंकरो महाभाग इति संकल्पयंती अविरलमनिमिषं चक्षुर्विक्षिपति स्म । रक्षापुरुषास्तस्य साहाय्यकृतस्संत्रस्तमानयेयुरावासगृहमस्मदीयमिति भावयंती चत्वरेषु विद्यमानेषु स्वयंभीतेषु नाम्ना रक्षापुरुषेषु दृष्टिमियं पातयंती तेषामचलनेन खिद्यंती किमयं क्रूराणां शस्त्रप्रहारैः प्रहृतश्चिकित्सालयं प्रापितः स्यादिति कल्पनया वेपमाना नयननलिनाभ्यां अविरलसलिलबिन्दून् वर्षन्ती निश्शब्दं रोदितुमारभत च । तावदेव रुचिरमूर्तेरपत्यस्य रोदनध्वनिमीषदिव समाकर्ण्य दोलायां शायितं तं हृदयनयनानन्दनमानन्दनिदानमात्मनन्दनं नंदनन्दननामानमादाय करतलेन गाढमाश्लिष्य असकृदुत्फुल्लं कपोलयुगलं संचुंब्य हसंतमवलोक्य किमरे धूर्त अनागतं पितरमनवलोकयन् भवान् न किंचिदपि चिन्तया ग्रस्तो हसति रे धन्यो भवानेव जगत्यस्मिन् इति समालपन्ती स्तन्यप्राशनाभिलाषिणस्तस्य मनोरथं पूरयितुमुद्यता पुनस्तेन सहैव गवाक्षस्थलमलंकृतवती । वृत्तपत्रेषु वाचयन्ती तत्रतत्र नृशंसानां क्रूरतमानि दुष्कृत्यानि

हिंसामयानि तादृशः प्रसंगः सर्वथा मा समापततु हृदयदयिते शंकरे इति आशुतोषिणं पार्वतीशं शंकरमभ्यर्थयतिस्म भगवन् परमेश्वर स्वामिन् दयानिधे भक्तवत्सल भगवन् शंभो हरहर महादेवेति । एकादशघण्टावादनध्वनिमाकर्ण्यैयं तावदप्यनागतं क्वापि रक्तप्रवाहपातितमिवालोचयंती निद्रामीलितलोचनं शिशुं पुनर्दोलायां निधाय स्वयं तदीयकार्यालयं प्रतिजिगमिषुरेकमात्मरक्षणार्थं निशितं ह्रस्वाकारं करवालमपि करे गृहीत्वा बहिर्गन्तुमियेष । परं कथमेकमेव शिशुं गृहे निधाय गन्तुमुचितं स्यात् इति पुनर्विकल्पदोलामाश्रयत्तस्य चंचलं हृदयम् । समयेऽस्मिन्नेकस्या बहिर्गमनपि अनर्थावहं निस्संशयमिति शंकमानायास्तस्याः हृदयमतितरां प्रस्फुरतिस्म । किंकर्तव्यमूढा सा प्रतिवेशिन्या मतमुपश्रोतुकामा निद्रितां तामुत्थापयितुमभिलषंती तदीयं द्वारं करतलेनाघट्टयंती नलिनि नलिनि इति द्वित्रिवारं शब्दापयामास । गाढं निद्रिता सा नोत्तरं दातुमशक्नोत् ।

मध्यरात्रे अहमिव का वा अधन्या निद्राविरहिता दुःखमग्ना प्रबुद्धा गृहे निवसेदिति पुनरात्मानमेव निन्दंती नलिनीप्रबोधनाद्विरता पुनरायाद् गवाक्षप्रदेशं यथावत् । दूरतो यं यं कंचिदपि दृष्ट्वा समागतं शंकरमेव मन्यतेस्म । ततः पुनर्न स इति विज्ञाय नितांतमुद्विग्ना बाष्पमभिवर्षंती चिंताक्रान्तहृदया विचारमूढा स्थूणा इव निश्चला भित्तिमवलंब्य पतितेव दृश्यतेस्म ।

तदानींच गौरी किंचिदिव कलकलध्वनिमश्शृणोत् । पुनरुत्थाय साशमाशु तां दिशं विशाले लोचने प्राहिणोच्छलिता । पंचषान् पुरुषान् संचरतः स्पष्टमवालोकयत् । प्राय एते प्रहृतं शंकरं गृहमानयेयुरिति भावयन्ती निश्चलया दृशा सूक्ष्ममवलोकयांचक्रे । ते च पुरुषा न कमप्यानयंतीत्यप्यमन्यत । तावत्तत्र सारमेया भषितुमारेभिरे । तांस्ते शिलाशकलैः प्राहरन् । सत्यमेते निर्घृणाः पापा नृशंसा घातुका अवकाशमुपलभ्य गृहेषु पुरुषाणामभावं विज्ञाय मादृशीर्ललना विदूष्य लुण्ठंति सर्वस्वमिति हाहा किमहमिदानीं करोमि मन्दभाग्या इति नितरां भीता सा समवेपत । सुखिनमागतं शंकरमहमावेदयामि सर्वथा भगवन् भवान् विचारविधुरो मामेकाकिनीमशरणामेवं परित्यज्य समये नागच्छति

पुनः स्साहं पितृगृहं गच्छाम्यद्यैव । भवताचासकृदभ्यर्थ्यमानापि नाहमागमिष्यामि चिरमपीति हृदये समवधारयत् सा क्षणम् ।

पुनरपरास्मिन् क्षणे जहास । यतः सा चिरानवलोकनार्त्या दुःखितयोः पित्रोराग्रहेण जन्मस्थानं मातृगृहमुपानीतापि द्वित्रिदिनाभ्यंतरेव पतिविरहमसह्यं मन्यमाना सुखेन निद्रामलभमाना प्रतिदिनमनेकानि पत्राणि पत्युः सम्प्रेष्य त्वरितमभ्येत्य नयतु मां गृहं भवदीयं भवान् इति संप्रार्थ्य तमानाय्य तेन सहागतवती पत्युर्गृहम् । एतदनुस्मरन्त्या वदने हास उदियायाकस्मात् । नृशंसानां प्रवेशप्रतिबंधाय दृढतरमायसशृंखलार्गलं दृढतरमबध्नात् । तावता धैर्यमवलंब्य वीरयोषितां झांशीलक्ष्मीदेव्यादीनां पराक्रमस्मरणेनात्मानं शूरां वीरां धीरामपि मन्यमाना पुनस्तान् पुरुषानालोकयितुमुद्यता अभूत । रथ्यांतं यावत्तान् गतानपश्यत् । ततश्च ते दृष्टेरगोचराः समभवन् । तत इयं गृहाभ्यन्तरभ्येत्य सलिलेन पात्रमेकमपूरयत् । आगते हृदयदयिते शंकरे कानि कानि वा वस्तून्यपेक्षितानि स्युः का वा जानाति इति मनसि ब्रुवाणा वस्त्रमेकं हस्तगतं तीव्रमेव यथा स्यात्तथा अस्थापयत् । तथाच फेनवटिकामेकामपि । ततो द्वारघट्टनं शंकमाना शंकरमागतं मन्यमाना आयसमर्गलं विमोच्य द्वारमुद्घाट्य कमप्यनवलोकयंती तदागमभ्रमो मां बाधते इति मन्यमाना अपि पुनरधोयावन्महाद्वारमुपेत्य पुनर्दृशा रथ्यासु पश्यंती सर्वथा अनागमनमूहमाना दृढतरं बध्वा कपाटयुगलं निराशा पर्यंके निक्षिप्तवती शरीरमियम् । सुखस्वापमभिलषंती न्यमीलयन्नयने । तथाप्यप्राप्तनिद्रा पुनर्गवाक्षप्रदेशमागत्य प्रेक्षमाणा पत्युरागमनमुपातिष्ठत । समयसूचकं एकघण्टावादनमाकर्णितवती । ततः पूर्णतया निराशा अविरलैर्नयनसलिलैरार्द्रीकुर्वाणा शयनतलं पतिता अभूत् पर्यंके । एवं चिन्तारतायास्तस्या रात्रिरंतमगमत् । अरुण उदित आरक्तमयैः किरणैराकाशमारक्तयामास । ततश्च स्पष्टभा रविरुदियाय सर्वानानन्दयन् । निशान्तलब्धनिद्रा ननिनायतलोचना गौरी सुखस्वप्नमेकमवलोकितवती । समीपे उपविश्य शंकरः समन्दहासं सोल्लुंठितानि वचनानि समुद्गिरन् अग्रतः समुपविष्टायाः कुटिलकुटिलानलकान् अंगुलीभिरसकृदुल्लासयन्

अधरामृतमास्वादयितुमुद्यत इति । तावदियमुद्बुद्धा तमनवलोकयंती पर्यंकादुत्थिता तावदयि गौरीति मधुरमधुरान्यमृतरसस्यन्दीन्यक्षराणि अश्रृणोत् । सत्वरं द्वारदेशमागता समुद्‌घाटितवती द्वारयुगलम् । तावदेवाशिथिमालिंगिता असकृदास्वादिताधरामृतरसा रोषादिव तं दोषास्पदं कर्तुमीहमानापि अशक्नुवंती किं भवतः प्रत्ययोस्ति न वा गृहे अहमेकाकिनी कथं वा वसेयमिति ब्रुवाणा तीव्रतरान् कटाक्षान् प्राक्षिपत् ।

अयि मधुराधरे गौरि नः कार्यालये अद्य भूयान् कार्यभरः आसीत् । कलकत्तानगरे महानेव भीषणतरः कदनकोलाहलो जगदेव व्याकुलयति नितांतमिति सहस्रशस्तंतीविद्युद्वार्ताः समापतंतिस्म । प्रधानमंत्री अॅटलीमहाभागः किमेतदर्थमेव समुज्जुघोष स्वातंत्र्यमिति लोका लोकनेतरश्चिताकुलाः विमुह्यंति कर्तव्यमजानंतः । श्वः प्रकाशयितुं पत्रिकायां सर्वं योजयितुमवकाशो महाँल्लग्नः । ततश्च रात्रावष्ट घण्टा वादिताः। ततः संचाराय रथ्यासु नावसरः । यः कोपि संचरन् दृष्टश्चेत्स तत्क्षणे एव गुलिकाप्रहारेण मारणीय एवेति सर्वकारस्याज्ञा जागर्ति । अर्थादपरिहार्यतया तत्रैव सहयोगिभिस्सार्थमुपहारमुपभुज्य तत्रैव कार्यालये विश्रांतिसदने सुखसुप्तः संप्रति पुनरागारमागतवानस्मीति समाश्वासयत् ।

अहो किमत्रत्या मंत्रिणः सर्वथा कर्म कर्तुमसमर्था एवेत्यहं बाढमावेदयामि । । विद्यमानेषु सहस्रशो रक्षापुरुषेषु स्ववशे कलकत्तायां वा लाहोरे वा अमृतसरेवा मुल्तानेवा दंदह्यंते शताधिकान्यापणानि लुण्टन्त्येव सर्वस्वं निर्भयतया । कर्त्यंते शरीराणि निरपराधिनां पात्यते रुधिरासारः । अथवा कुतस्नेषु नगरेष्विति । मुम्बापुर्यामेवास्यां बहिर्गतः पुरुषो गृहं सुखमभिष्यतीनास्ति निश्चयः । मन्दिरप्रवेश—द्विभार्याविवाहप्रतिबंधादिअनुपयुक्तशासननमात्रनिर्माणप्रवणो मंत्रिगणः न निरपराधिसंहारं प्रतिबध्नाति । नाहारधान्यमुपकल्पयति जनानाम् । प्रथमत एव अपर्याप्तधान्यप्रदापनेन तण्डुलकार्यं यावनालैरनुष्ठीयमानमनितरसाधारणं दुःखमुद्भावयति प्रजानाम् । सत्यप्येवं भयंकरे प्रसंगे पुनस्तण्डुलादिधान्याना प्रदानमल्पीक्रियते सर्वकारेणेत्यत्र को वा लाभोऽनेनात्मीयम्मन्यतास्पदेन राजमण्डलेनेतिं तंतप्यते हृदयम् ।

अंधीभवति चक्षुः । दंदह्यते गात्रम् नितांतं वेपते सर्वांगम् निरुपायतया । किं वा कुर्वंति वा भवंतो लेखनकलाकुशलाः पण्डितम्मन्याः । अलमलमनया नितांतं दुःखकारणया चिन्तया । भगवन् स्नातु भवानविलंबम् । क्षिप्रमेवाहं पचापि स्वादुतरमन्नादिकम् । पुनरस्त्येव भवतः कार्यालयं प्रतिगन्तुं त्वरातिशयः । ह्यस्तु नाहं भुक्तवती भवंतमंतरा इति मधुरमुदगिरत् । ततः स प्राह प्रिये अद्यपुनर्दिवसे पूर्णतया गृहीतो विश्रामः । अतः श्वः सूर्योदयो यावत् सुखसंल्लापमन्तरा नान्यत् किंचिदपि कार्यमित्यावेदयन् पुनरशिथिलमंगान्यालिलिंग । उभयोरपि गात्रयष्टी चिरमानन्दसिंधुनिमग्ने आश्लिष्टे समभूतामित्यलम् ।

---

## सज्जनप्रार्थना

श्री चन्द्रचूड करुणामय दीनबन्धो
बालस्य मे कलिभयार्दितमानसस्य ।
विज्ञापनीयमिदमस्ति किमप्युमेश
तच्छ्रोत्रदानकरणाज्जगदीश रक्ष ॥ १ ॥

लीलायितं जगदिदं भवतः परात्म—
—न्नित्यागमैश्च सकलैरुपवर्ण्यते यत् ।
दुःखाकरोति च सतां खलदुश्चरित्रं
तस्मादनर्थपरया किमु लीलया ते ॥ २ ॥

सर्वज्ञ शङ्कर तवापि निवेदनीय—
मस्तीह किं जडधिया च मया महेश ।
अभ्यर्थयाम्यनुदिनं परमेश ताव—
—द्रक्ष्यास्त्वया सुचरिताः खलु दुर्जनेभ्यः ॥ ३ ॥

नास्तिक्यवादनिरताः खलु दुर्जनास्ते
नित्यं निषिद्धपदवीमनुरुद्ध्य कामम् ।
नीचैः पतन्ति च परानपि पातयन्ति
तत्साधवोऽत्र भवता परिपालनीयाः ॥ ४ ॥

आत्रेयवेङ्कटसुब्रह्मण्यशर्मा.

भारविमहाकविकृते किरातार्जुनीये

# मङ्गलपद्यमिदम्

साहित्यरत्नम् आस्थानमहाविद्वान्
जग्गुवेङ्कटाचार्यः
वाणीमोहल्ला मैसूर.

"श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुंक्त वेदितुम्।
स वर्णिलिङ्गी विदितस्समाययौ युधिष्ठिरं द्वैतवने वनेचरः" इति ॥

अस्य व्याख्या मल्लिनाथसूरिणैवं कृता "कुरूणां जनपदानाम् अधिपस्य—दुर्योधनस्य संबन्धिनीम् श्रियः राजलक्ष्म्याः पालनीं—प्रतिष्ठापिकाम्—प्रजासु—जनेषु विषये—वृत्तिम् व्यवहारं वेदितुं ज्ञातुं यं वनेचरं न्ययुंक्त—नियुक्तवान्—वर्णी—ब्रह्मचारी—तस्य लिङ्गमस्यास्तीति वर्णिलिङ्गी सः—नियुक्तः वनेचरः किरातः विदितः—विदितं वेदनमस्यास्तीति विदितः—परवृत्तान्तज्ञानवानित्यर्थः—"अर्शआदिभ्योच्"—इत्यच्प्रत्ययः—अथवा—कर्तरि कर्मधर्मोपचारात् विदितवृत्तान्तो विदित इत्युच्यते। उभयत्रापि "पीता गावः" "भुक्ता ब्राह्मणाः" "विभक्ता भ्रातरः" इत्यादिवत्साधुत्वम्—न तु कर्तरिक्तः सकर्मकेभ्यस्तस्य विधानाभावात् अत एव भाष्यकारः "आकारो मत्वर्थीयः विभक्तमेषामस्तीति विभक्ताः—पीतमेषामस्तीति पीताः" इति सर्वत्र॥ अथवा उत्तरपदलोपोऽत्रद्रष्टव्यः विभक्तधना विभक्ताः। पीतोदकाः पीता इति। अत्र लोपशब्दार्थमाह कैयटः "गम्यार्थस्याप्रयोग एव लोपोभिमतः। विभक्ता भ्रातर इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचरितम्। पीतोदकाः गावः इत्यत्रापि उदकस्य पीतत्वं गोष्वारोप्यते" इति। तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचरे उपचर्यते। एतेन "वनाय पीतप्रतिबद्धवत्सां" "पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु" एवमादयो व्याख्याताः। अथवा, विदितो

विदितवान्—सकर्मकादपि अविवक्षिते कर्मणि कर्तरि क्तः, यथा "आशितः कर्ता" इत्यादौ। यथाहुः "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इति। द्वैतवने—द्वैताख्ये तपोवने। युधिष्ठिरं—धर्मराजम् समाययौ—संप्राप्तः इति।

एतद्व्याख्यानुसारेण पद्यस्येदन्तात्पर्यम्—दुर्योधनेन द्यूतजिताः पाण्डवाः द्वैताख्ये तपोवने न्यवसन्। तदा युधिष्ठिरः कञ्चन किरातं हास्तिनपुरं प्रेषयामास, "त्वं गूढचारो भूत्वा दुर्योधनः प्रजाविषये कथं वर्तते इति ज्ञात्वा प्रत्यागच्छे' ति। स किरातः तद्वृत्तान्तं विदित्वा ब्रह्मचारिवेषो भूत्वा द्वैतवनस्थितं युधिष्ठिरं प्रत्याजगाम" इति।

अत्र मल्लिनाथसूरिः मूलपद्यस्थितस्य 'विदितः' इतिपदस्य 'विदितदुर्योधनवृत्तान्तः' इत्यर्थं मनसि निधाय महान्तं क्लेशमन्वभवत्। चतुर्धा हि तव्द्याख्यायां तादृशार्थनिर्वाहः कृतः—तत्र प्रथमोयं निर्वाहः "विदितं वेदनमस्यास्तीति विदितः परवृत्तान्तज्ञानवानित्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः" इति।

अस्मिन्निर्वाहेऽयं क्लेशः, विदधातोर्भावेक्तप्रत्ययान्तत्वमादावभ्युपगम्य वेदनमिति तदर्थमुक्त्वा तदनन्तरमर्शआद्यजन्तत्वांगीकारादेकस्य विदधातोर्भावेक्तान्तत्वाजन्तत्वाभ्यां वृत्तिद्वयकल्पनागौरवमिति।

अतो द्वितीयोऽयं निर्वाहः प्रदर्शितः, "अथवा कर्तरि कर्मधर्मोपचाराद्विदितवृत्तान्तो विदित इत्युच्यते, उभयत्रापि 'पीता गावः' 'भुक्ता ब्राह्मणाः' 'विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम्" इति।

ननु 'पीतागाव' इत्याद्युदाहरणत्रयेपि 'पीताः' 'भुक्ताः' 'विभक्ताः' इति त्रयाणां कर्तरिक्तान्तत्वमेव स्यात्, तथा प्रकृते 'विदित' इत्यस्यापि कर्तरि क्तप्रत्ययान्तत्वमेव स्यात्—तथाच वृत्तिद्वयकल्पनागौरवं औपचारिकत्वकल्पना-

गौरवञ्च न भवति । इतिचेत् एतेषां चतुर्णां कर्तरिक्तप्रत्ययान्तत्वे व्याकरण-विरोधमाह 'न तु कर्तरिक्तः, सकर्मकेभ्यस्तस्य विधानाभावात्' इति ॥

इत्थंञ्च 'पा' 'भुज्' 'भञ्जो' 'विद्' धातूनां चतुर्णां सकर्मकत्वात्तदुपरि कर्तरिक्तो, न भवतीत्यर्थः । अत्र महाभाष्यकारसंमतिमाह 'अत एव भाष्यकारः अकारो मत्वर्थीयः विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीताः इति सर्वत्र' इति ॥ भाष्यस्यायं भावः, उक्तोदाहरणेषु धातूनां सकर्मकत्वात्कर्तरिक्तप्रत्ययान्तत्वासंभवादर्शआद्यजन्तत्वाङ्गीकारेणैव निर्वाहः कार्य इति ॥

इत्थंञ्च द्वितीयनिर्वाहे वेदनकर्मीभूते वृत्तान्ते विद्यमानं विदितत्वं तद्वेतनकर्तरि किराते उपचर्यत इति कृत्वा औपचारिकवृत्तेर्वाक्यदोषत्वेन न्यायविद्भिर्निरूपितत्वाद्दोष इति सिद्धम् ॥

अतस्तृतीयं निर्वाहमाह 'अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः, विभक्तधनाः विभक्ताः, पीतोदकाः पीताः' इति ॥ अस्मिंस्तृतीयनिर्वाहेऽयं विशेषः । पीतोदका गाव इति प्रयोगे कर्तव्ये गोविशेषणे 'पीतोदका' इत्यत्रोत्तरपदस्य उदकशब्दस्य लोपं कृत्वा 'पीता गावः' इति यथाप्रयोगः तथा 'विदितवृत्तान्तः वनेचरः' इति प्रयोक्तव्ये वनेचरविशेषणे 'विदितवृत्तान्त' इत्यत्र उत्तरस्य वृत्तान्तपदस्य लोपं कृत्वा 'विदितः' इति प्रयोगः कृत इति ॥ अत्र विवक्षितस्य पदस्य अप्रयोग एव लोपशब्दार्थ इत्यत्र भाष्यप्रदीपकारस्य कैयटस्य संमतिमाह 'अत्र लोपशब्दार्थमाह कैयटः गम्यार्थस्याप्रयोग एव लोपोऽभिमतः' इति ॥

अस्मिन्नुत्तरपदलोपाङ्गीकारपक्षेपि यथा लुप्तस्योत्तरस्योदकपदस्य मनसानुसन्धीयमानस्य उदकोपस्थापकत्वेपि उपस्थिते उदक एव विद्यमानं पीतत्वं पानकर्तरि गवि उपचारं विना न निष्पद्यते, तथा प्रकृते उत्तरस्य वृत्तान्तपदस्य लोपेपि मनसानुसन्धीयमानेन वृत्तान्तपदेन वृत्तान्तस्योपस्थापनेपि वृत्तान्ते

विद्यमानं विदितत्वं तद्वेदितरि वनेचरे उपचारं विना न निष्पद्यत इति औपचारिकी वृत्तिरपरित्याज्यैव । उत्तरपदलोपकल्पनन्त्वधिकम् ॥ एतत्पक्षावलंबनेनैव "वनाय पीतप्रतिबद्धवत्साम्" "सुष्मास्वपतिषु" इत्यादिकालिदासप्रयोगा निर्वाह्या इत्यप्याहात्रैव ॥

एवं निर्वाहत्रयेपि दोषं मत्वा चतुर्थमपि निर्वाहमाह । "अथवा विदितो विदितवान् सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः यथा अशितः कर्ता इत्यादौ, यथाहुः "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविविक्षातः कर्मणोऽकर्मिका क्रिया" इति ॥ अस्मिंस्तुरीयपक्षेपि सकर्मकत्वेन सर्वप्रसिद्धोपस्थितिकस्यापि विदिधातोः "अयं सकर्मकोऽप्यकर्मकत्वेन मे भासताम्" इत्याहार्यज्ञानेन अकर्मकत्वं कल्पनीयमिति महदन्याय्यम् ॥

एवं मूलस्थस्य विदितपदस्य विदितवृत्तान्त इत्यर्थं मन्वानेन मल्लिनाथसूरिणा चतुर्विधनिर्वाहेष्वप्यस्वारस्यपर्यवसन्नेष्वेव महान् क्लेशोऽनुभूतः इत्यत्र सर्वसहृदयहृदयान्येव प्रमाणम् ॥

यद्येवंविधक्लेशप्रहाणेन सुखोपस्थितिकः कश्चिदर्थ उपलभ्येत, स च सर्वसहृदयैरादरणीय एव भवेत्, तादृशश्चार्थोऽस्माभिरुपवर्ण्यते ।

मूलस्थस्य विदितपदस्य विदितवृत्तान्त इति नार्थः । किन्तु ज्ञात इत्येवार्थः, सकर्मकस्य विदधातोः कर्मणि क्तप्रत्ययान्तत्वस्य व्याकरणसंमतत्वादुक्तविधक्लेशाभावाच्च । केन ज्ञात इति जिज्ञासायां युधिष्ठिरेणेत्यर्थसिद्धम् । युधिष्ठिरेण ज्ञात एवायं किरातः, ज्ञातव्यांशः क इति चेत् "मया दुर्योधनवृत्तान्तज्ञानाय प्रेषितोयं गूढचारः किरातः" इति ज्ञात इत्यर्थः । ननु युधिष्ठिरेणैव प्रेषितोयं तेनैव कथं न ज्ञायेत । किमिदानीं ज्ञातव्यमिति चेन्न । स्वप्रहितकिरातत्वेन ज्ञाने बाधकं मूलकारेणैव स्पष्टीकृतं "वर्णिलिङ्गी" ति पदं विदितपदाव्यवहितपूर्वमेव निवेशयता । कथमिति चेत्, ब्रह्मचारिवेषेणागतोयं किरातः किरातत्वेन यदि न ज्ञायेत, तदा युधिष्ठिरः स्वधर्मानु-

सारेण तं ब्रह्मचारिणं प्रत्युत्थानाभिवादनादिभिस्सत्कुर्यादेव। तच्चोक्तयोर्धर्मविरुद्धम्। अतस्तादृशाधर्मपरिहारायैव ब्रह्मचारिवेषेपि किरातः किरातत्वेन विदित इति विदितपदं सार्थकम्। एतादृशतात्पर्यद्योतनायैव कविना द्वितीयश्लोकारंभ एव "कृतप्रणामस्य" इति किरातविशेषणं निविष्टम्॥ किरातत्वेन विदितत्वादेव किरात एव नमश्चकार युधिष्ठिरम् नतु ब्रह्मचारिणमपि तं युधिष्ठिर इति तदभिप्रायः। अत एव तृतीयश्लोके "रहस्यनुज्ञामधिगम्य भूभृतः" "इति वाचमाददे" इति रहसि वृत्तान्तकथनमुच्यते, एतेन युधिष्ठिरेणैकेनैवायं किरातत्वेन ज्ञातः। अन्यैस्तु ब्रह्मचारित्वेनैवेत्यपि सूच्यते। ननु दुर्योधनवृत्तान्तज्ञानायैव किरातस्य युधिष्ठिरेण प्रेषितत्वाद्विदितवृत्तान्त इत्यर्थस्यैवावश्यकत्वात् क्लेशसह्य इति चेत् उभयोः पक्षयोः कस्यार्थस्यावश्यकत्वमिति विचारे विदितवृत्तान्त इत्यर्थापेक्षया किरातत्वेन विदित इत्यर्थस्यैवावश्यकत्वम्। विदिवृत्तान्त इत्यनुक्तावपि विदितवृत्तान्तत्वं सिद्धमेव। यदायं युधिष्ठिरसकाशमागतस्तदैव ज्ञायते विदिवृत्तान्त इति। न ह्यकृतकार्यो दूतस्स्वामिनं प्रत्यागच्छति। किञ्च तृतीयश्लोकमारभ्य द्वाविंशत्या श्लोकैर्दुर्योधनवृत्तान्तस्य कथनासंभवान्न तावती प्रयोजनवत्ता। किरातत्वेन ज्ञात इत्यस्यार्थस्य तु उक्तरीत्या धर्मराजस्य धर्मातिक्रमपरिहाररूपप्रयोजनवत्ता सिद्ध्यति॥

ननु पक्षद्वयेपि यथायथमुपपत्तयो विद्यन्त एव, किमेकत्र पक्षपातेनेति चेन्न—यदि मल्लिनाथोक्तनिर्वाहेषु चतुर्ष्वपि क्लेशा न स्युस्तर्हि तदुक्तेषु को नः प्रद्वेषः?

किन्तु यत्र पक्षे शास्त्राणां सुखसङ्गमनीयत्वं अर्थोपस्थितावक्लेशश्च दृश्यते, तत्र पक्षपातिभिर्भाव्यं सहृदयैश्शास्त्रज्ञैरिति विज्ञान्विज्ञापयामि॥

---

# अखिलकर्णाटकज्यौतिषिकसम्मेलनम्

प्रेषकः—गणपति शर्मा हेगडे.

अस्मिन्वर्षे गतज्येष्ठशुक्ल ५ आरभ्य ४ दिनपर्यंतं कर्नाटकदेशप्रसिद्धे शिवमोग्गनगरे मैसूरुदेशीयपण्डितसम्मेलनं, अखिलकर्णाटकज्यौतिषिकसम्मेलनम्, आगमत्रयसम्मेलनम्, सनातनधर्मसंमेलनञ्च श्रीश्रीद्वारकापीठाधीश्वराणां जगद्गुरुश्रीअभिनवसच्चिदानन्दतीर्थस्वामिनां नेतृत्वे महता समारोहेण संपन्नानि। कर्णाटकप्रान्तीयाः प्रायः सर्वेऽपि प्रसिद्धा विद्वांसः सम्मिलिता आसन्। तत्र बेंगळूरुराजकीयविश्वविद्यालयस्य (सेंट्रलकॉलेज) गणितशास्त्र-प्राध्यापकानां (गणितप्रोफेसर) डा. सि. एन्. श्रीनिवासय्यंगार्याणां आध्यक्ष्ये श्रीद्वारकापीठाधीश्वराणां महासान्निधाने च सम्मिलिते ज्यौतिषिकसम्मेलने सिद्धान्त—दृग्गणितादिसर्वपक्षवादविमर्शपूर्वकं अग्रे लिखिताश्चतुर्दश निर्णयाः सर्वानुमत्या निर्णीताः।

## निर्णयाः

१. भारतीयज्योतिःशास्त्रं मूलतः शास्त्रोक्तकर्मणां कालनिर्णयप्रयोजनार्थं प्रवृत्तम्॥

२. वेदोक्तकर्मानुष्ठानयोग्यकालज्ञानप्रयोजनवत्त्वात् ज्योतिःशास्त्रं वेदांगमित्युपपद्यते॥

३. शास्त्रविहितकर्मकालनिर्णये लक्ष्यस्य व्याप्तिभेदस्य, तिथेः परमवृद्धिक्षयपरिमितेश्च मिथो नित्यः संबंधो वर्तते॥

४. सिद्धान्ताद्यार्षसम्मतभारतीयगणितग्रन्थपरम्परासु कर्मार्हतिथेः परमवृद्धिक्षयपरिमितिः सर्वत्र समाना वर्तते (न तु भिन्नभिन्नतरा)॥

५. कर्मविशेषे निर्दिष्टानां तिथ्यादीनां कर्मार्हत्वस्य निर्णये शास्त्रमेव प्रमाणम्, (न तु प्रत्यक्षम्)॥

६. ज्योतिःशास्त्रोक्तविषयेषु केचित् प्रत्यक्षेण निर्णेतुं शक्या अपि सर्वेऽपि विषयाः प्रत्यक्षेण निर्णेतुं न शक्याः ॥

७. (१) शास्त्रसिद्धग्रहादीनां दृक्प्रतीत्यर्थमपेक्षितो विशिष्टः संस्कारः बीजसंस्कार इत्युच्यते ॥

(२) तत्र लाक्षणिकभेदोऽप्यस्ति ॥

८. विषयभेदाद् व्यवस्थया बीजसंस्कारस्य विनियोगः शास्त्रविरुद्धो न भवति ॥

९. अष्ट (सप्त) वृद्धि—दशक्षयावधिका नवीनदृक्तिथिः श्राद्धादिकर्मानुष्ठानयोग्या न भवति ॥

१०. कर्कटमकर (निरयन) संक्रान्त्योः कर्मार्हदक्षिणोत्तरायणारंभणं, तन्निमित्तकपुण्यकर्माचरणं च शास्त्रविहितमस्ति ॥

११. सूर्यसिद्धान्तसाधितमन्दोच्चतुल्यसूर्यस्फुटस्य, तात्कालिकच्छायासाधितसूर्यस्फुटस्य चान्तरमयनांश इति परिग्राह्यं स्यात् ॥

१२. शास्त्रसंमतं पञ्चांगं साकल्येन रचयितुं पर्याप्तं सुलभक्रममेकं करणग्रन्थं सुधीभिर्दैवज्ञै रचयित्वा तेन सकलं पञ्चांगं प्रणेयम् ॥

१३. (तावत्पर्यंतं) सूर्यसिद्धान्तगणितं, दृग्गणितंच (व्यवस्थित) विषयभेदेन परिगृह्य पञ्चांगं साध्यम् ॥

१४. तिथ्यादिविषयेषु सूर्यसिद्धान्तगणितं, ग्रहणादिविषये दृग्गणितं च उपयोज्य (समस्त) पञ्चांगं गणनीयम् ॥

एते निर्णयाः सर्वानुमत्या निर्णीताः । अवशिष्टविषया अग्रे निर्णेया इति निक्षिप्ताः ॥

इति शम्.

# न्यायमन्त्री

लेखकः—वि. कृष्णस्वाम्यय्यङ्गार्यः कल्याणपुरी

१

अशोकस्य साम्राज्ये सर्वत्र बुद्धधर्मस्य प्रचारः परां कोटिमगाहत। निरपराधानामपि परमतीयानां विदुषामन्याय्यं दण्डनं विदधाना उन्मत्ता अधिकारिणो यथेच्छं व्यवाहरन्त। ब्राह्मणानां जीवनमतीव कष्टमयं समजायत। वेदाभ्यासव्यसनिभिरपि भूसुरैः शस्त्रग्रहणमवश्यकर्तव्यमापद्यत, यतो हि बुद्धमतानुयायिनो न्यायनिर्णयेऽधिकृता राजपुरुषाः स्वधर्माभिमानं परित्यज्य न्यायदेवतायाः प्रसादं सम्पादयितुं नभिलषन्ति स्म। एवमुपनते प्रजानामतिभयङ्करे न्यायविप्लवे विद्रोह एव राजभयस्य समीचीनमौषधमिति क्रान्तिभावना युवकानाचक्राम। अन्याय्यानि कर्माणि वारंवारं पश्यन्तस्तरुणा वयोधर्मसहजेनोत्साहेन शत्रुविनाशं प्रत्यक्षासिषुः। सर्वे वयं संमिलिता गत्वाऽशोकचक्रवर्तिनमेव साक्षादुपगच्छाम। अधिकारिणां स्वेच्छाविहारानावेदयाम। न्यायरक्षणमन्तरेण साम्राज्यं न कथञ्चिदपि जीविष्यतीत्यभिदधाम। अस्माकमसंख्येयानि दुःखानि यथार्थं विज्ञापयाम। न्यायानुसारिणो विवेकशीला निष्पक्षपाता अधिकारिणो नियुज्यन्तामित्यभ्यर्थयामहे। यदि विषादसागरे निमग्नानप्यस्माननुद्दिधीर्षुर्विलासलोलः अयमशोकः अस्माकमभ्यर्थनामाकर्ण्यापि तूष्णीमेवावस्थास्यते तर्हि यत्सत्यमचिरेण प्रज्वालनीयो विद्रोहदावानलो भविष्यति इति दृढं सङ्कल्पमबध्नन्। निरवर्तयंश्च विनैव कालविलम्बमात्मीयां प्रतिज्ञाम। अशोकोपि परधर्मीयेषु नैसर्गिक्याऽनुकम्पया तैर्विज्ञापितान्विषयान्सम्यक् पर्यालोच्य पापीयसां विधर्मिविद्वेषगर्हणीयानामधिकारिणां निर्वासनमाशु संविदधामीति प्रत्यशृणोत्। चक्रवर्तिनो न्यायरक्षणोत्साहमन्यादृशमवेक्ष्य विद्रोहचिन्तां विस्मृतवन्तस्तरुणास्सप्रमोदमात्मीयमावासस्थानं न्यवर्तन्त।

२

बुद्धगयाख्ये ग्रामे शिशुपालाभिधानो विद्वान्सुशीलो निरसूयो धर्मपरो न्यायपक्षपाती गुणप्रियो दरिद्रो ब्राह्मणः प्रतिवसति स्म। "द्विजातीनां सहकारादृते राजकार्याणां निर्वाहो नैव शक्यते। न्यायरक्षणेऽपि विलक्षणमस्माकं सामर्थ्यं प्रकाशते। परधर्मीयास्तु महता प्रयासेन प्रयतमाना अपि यत्रकुत्रापि नियमेन स्खलन्ते। नियमानामनुपालने भूसुराणामेवाधिकारो न्याय्यः। बौद्धाभिमानिनस्तु कालगत्या विपरीतामस्माकमवस्थामालक्ष्य यथेष्टमुपहसन्तो बृहस्पतिंमन्या दुरहङ्कारदाहज्वरेणाभिभूताः कार्याकार्यविवेकस्य सम्पूर्णतया विलोपादस्मानवमन्यमाना विनाशमार्गमवलम्बन्ते। अभिप्रसुप्तमास्माकीनमनभिभवनीयं तेजः प्रस्फुरमाणमधुना झटिति प्रकटीभवदन्धन्तमस्समूलमुन्मूयिष्यति। असहनीयानत्याचारानवेक्ष्य कुपितानां वेदविदां शक्तिस्संधुक्षिता भवति। उत्तेजकसामग्रीमन्तरेण स्फुलिङ्गावस्थो वान्हिर्दाहकर्मणि न व्यापिपर्ति। अन्याय्यकर्मणां दुराचारा गुप्तमस्मत्सामर्थ्यमचिरेण प्रोद्दीपयिष्यन्तीत्येतादृशी तस्य धार्मिकस्य विचारधारा प्रावर्तत। यद्यपि धर्मभीरवो मुक्तिलाभाय प्रयस्यन्तोऽग्रजन्मानः स्थैर्यविपर्यासादनावश्यकेषु पण्डितानामनभिलषणीयेष्वैहिकसुखेषु श्रद्धामासक्तिं वा बिभ्राणाः परतत्त्वसाक्षात्कारमाद्रियमाणा राजकीये हस्तक्षेपाय न प्रयतितुमर्हन्ति तथापि सामाजिकीं परिस्थितिमुपलक्षयता क्षत्रियकुलोत्पन्नानां प्रजापालनपराङ्मुखतां न्यायदेवताप्रसादनाकुतुकिताञ्च विलोकयता विप्रेण राजकीयरङ्गेऽपि महती क्रान्तिरुत्पादनीयेति शिशुपालः शिष्यानुपदिशन्नासीत्। 'शापादपि शरादपीति सूक्तिरस्माभिर्यथार्थयितव्या भवति। प्रतिषिद्धमपि शस्त्रग्रहणमात्मरक्षणायावश्यमनुष्ठेयमेव। देवतांशस्यापि नृपतेरन्याय्यं पन्थानमनुसरतो दण्डनमावश्यकमित्येव नीतिशास्त्रविदामाशयः। गुरोरप्यवलिप्तस्य कार्याकार्यमजानतो दुर्मार्गं प्रतिपन्नस्य कार्यं भवति शासनम्। अभ्यस्यतामस्त्रविद्या, पराभूयतामरिसंघातः, उद्ध्रियतां राजदण्डभीतानां प्रजानां मनःशल्यम्, प्रतिष्ठाप्यतां सुखमयं साम्राज्यम्। शाश्वती शान्तिर्विलसतु शस्त्रसंग्रहेण। विना कारणमन्यस्य मारणं दोषः। बहूनां संरक्षणाय दुर्मार्ग-

गामिनः पीडनमपि पुण्याय । आरभ्यतां साम्राज्यपरिवृत्तिकारी महान्विद्रोहः" इत्येवमस्य क्रांतिप्रधानस्य शिशुपालस्य वचनान्याकर्ण्याकर्ण्य विद्याग्रहणायोपसेदुषामन्तेवासिनां तरुणानाममुष्णं रक्तमतीव वेगेन प्रवहति स्म । उत्साहः स्थायी भावस्समवर्तत । अशोकस्य बुद्धमतानुयायिनस्साम्राज्यमुच्छेत्तुं कृतसङ्कल्पा बहवो धीरास्तरुणाः शास्त्रविद्यामभ्यस्तुमपेक्षाञ्चक्रिरे। विद्रोहबीजावापमेवमुपधार्य कृतकृत्यतायाः प्रथमं सोपानमधिरूढः स शिशुपालः कर्मव्यग्रस्य विप्रस्य कियत्सामर्थ्यमिति निदर्शयामास ।

३

रमणीयस्सायङ्कालः । आहारसंपादनाय दूरमुड्डयिताः पक्षिणः सत्वरं प्रतिनिवृत्य पुत्रकान्बुभुक्षया स्वागमनमेव प्रतीक्षमाणांस्तर्पयितुमारभन्त । विहङ्गमानां कलकलनिनादेन महत्संगीतकमिव प्रवृत्तमासीत् । शमदमादिभिरलंकृतास्तपोनिष्ठा विप्रास्सन्ध्यावन्दनमाददिरे । सायंसमये समासभास्तस्य तपनीयमयस्येव कीदृशी सुषमा मयूखमालिनः । प्रकृतिसौन्दर्यमक्षिभ्यां पातुमिव व्यवसिता रसिका ब्रह्मानन्दस्य परां काष्ठामधिजग्मुः । वश्यवाचः कवीश्वरा अपि तात्कालिकं सौन्दर्यविशेषं यथावद्वर्णयितुमनीश्वरा इत्येतावदलम् ।

एतादृशे परमरमणीये संनिवेशे शिष्यगणपरिवृतः शिशुपालस्सायमनुष्ठेयानि नित्यकर्माणि समाप्य सन्तुष्टान्तरङ्गस्सुप्रसन्नमूर्तिर्विरराज । संशयपरिहाराय स्वीयेषु पाठेषु नानाविधान्प्रश्नाननुयुञ्जाना विद्यार्थिनस्तं परिवव्रुः । एतस्मिन्नन्तरे कश्चिदविज्ञातकुलगोत्रो मार्गक्रमणेन परिश्रान्तः पिपासुः पथिकस्समीपमुपाजगाम । दैन्योपहतयाऽपि स्निग्धगम्भीरया गौरवसूचिकया वाण्या पानीयमभ्यर्थयाञ्चक्रे । धूलिधूसरितकायस्याऽपि कुलिनतामस्य विवृण्वन्ति शुभलक्षणानि स्पष्टाण्यदृश्यन्तागम्भीराकृतिमुदारवंशाभिजनं तं ललितवेषं पुरुषमालक्ष्य शिशुपालस्य मनसि प्रादुर्बभूव पुरस्कारबुद्धिः । सादरमतिथिसत्कारमानन्देन विधाय पप्रच्छासावागन्तुकस्य वृत्तान्तम् । सोऽपि सुमधुरेणेक्षुकाण्डरसोपमितेन शीतलेन सलिलेन क्षपितापिपासः व्यपनीतपरिश्रमः स्वभावसिद्धं मन्दस्मितं प्रकटयन्सम्भाषणमुपचक्रमे ।

सरसे संल्लापेऽनुवर्तमानेपि नूतनाभ्यागतोऽयमतिथिरात्मनो वंशं नामधेयमागमनकार्यं वा किञ्चिदपि नावोचत् । अवहितचित्तेनागन्तुकस्य वेषभूषाभाषादिकमतिसूक्ष्मरीत्या परीक्षमाणो गुणग्रहणपटुः शिशुपालस्तु नामधेयादिकमनावेदयन्तममुमुपलभ्य बलात्कारमनुचितमनावश्यकञ्चाभिसन्दधानस्तूष्णीम्बभूव । न हि स्वयमनाचक्षाणस्य तस्य पुनःपुनरनुयोगेन मानसिकी व्यथा सम्पादनीयेति भारतीयोचितया भावनया जोषमासीत् । रात्रावपरिचिते देशे यत्रकुत्राऽपि भोजनशयनार्थं गमनमनावश्यकमिति साग्रहमुपादिश्य स्वगृह एव सकलविधमप्यानुकूल्यमुपपादयामास । अभूतपूर्वेणानेन सत्कारेण नितरां संप्रहृष्टस्स आगन्तुकस्सपदि शिशुपालमवितथाभिर्वाग्भिरभिष्टोतुमारभत । तस्याभिनन्दनवचनानि सलज्जमाकर्ण्य प्रमुदितचेताः शिशुपालस्तेन साकं भोजनविधिं निरवर्तयत् । प्रववृते चानयोर्मैत्रीप्रणयमधुरस्सरसः, संल्लापः । धार्मिकास्सामाजिका राजकीयाश्च बहवो विषया विमर्शपदवीमवजगाहिरे । सर्वत्र विषयेषु विस्मयकारकमनितरसाधारणं पाण्डित्यं प्रकाशयतः शिशुपालस्य विज्ञानमवेक्ष्य भृशमभिननन्द संमुदितस्स नूतनाभ्यागतः । 'निरवधिकं भवदीयं वैदुष्यमशेषान्विषयान्यथावद् व्यवस्थापयति । एतादृशे कुग्रामेऽपि भवादृशाः पण्डितप्रकाण्डास्समुपलभ्यन्त इत्यहो पात्रविवेकहीनस्य विधेर्विस्मयकारि विलसितम् । पङ्के हि कमलमुपजनयता तेन दिवान्धानामावासभूते कुग्रामे भवन्तोऽसृज्यन्त । अनुचितमिवैतत्पश्यामि यदेतादृशस्य नीतिविदो भवतः पाटलीपुत्रं विहाय शृगालपरिचिते निर्जनेऽस्मिन्कुग्रामे निवासः । अशोकचक्रवर्तिनस्सभायामुन्नतमधिकारस्थानमलङ्कर्तुमर्हति भवान्' इत्येतान्यागन्तुकस्य प्रशंसाक्षराणि निशम्य शिशुपालस्य प्रमोदस्सीमानमतिचक्राम । अशोकनामश्रवणमात्रेण चास्योद्दीपिता विद्रोहभावना क्षणेन महान्तमुपन्यासमाविरकारयत् । अशोकस्य न्यायरक्षणौदासीन्यमधार्मिकतां च मनोरमयाऽपि परुषया सामाजिकप्रीणनचणयाऽपि राजपुरुषकर्णकठोरया सुकुमारयाऽपि दुन्दुभिध्वानप्रचण्डया गिरा वर्णयामास । आगन्तुकस्य मनोवृत्तिमपरीक्षमाण एव क्रोधावेगविलुप्तविवेकः स्वाभिप्रायमशेषं प्राचीकटत् । विद्रोहवृत्तान्तमपि विनैव भीतिलेशमुपन्यास्थत् । अपरिचितोऽयमज्ञातभावः पुमान्गुप्तचरश्चेदापतिष्यति महदस्माहितमिति सम्भावनाऽप्यस्य मनसि

नोदभवत् । तेजस्वी नीतिवार्तानभिज्ञो विद्वान्स ब्राह्मणस्समग्रमात्माभिप्रायमनर्गलं प्रकाशयामास । आगन्तुकश्च विस्मयमानचित्तः शिशुपालस्यावसिते सावेशे समुपन्यासे स्वाशयमावेदयामास—'आधुनिका हि विप्रास्सर्वेऽपि धीरा वाचैव केवलमिति सूनृतायाः सूक्तेर्निदर्शनानि दृश्यन्ते । न अद्युना कश्चिदेतादृशः कार्यदक्षो विद्वान्विप्रः समग्रे भारते लभ्यते यो विना कमपि दोषमस्खलितं न्याय्यरक्षणं कुर्यात् । साक्षिणामनृतभाषणात्क्वचिदन्याय्यमपि दण्डनं विदधते न्यायाधिकारिणः । एवं केचिद्विरचितापराधा अपि पापिष्ठाः साक्षिणामभावात्तेषां दूषितकर्मणामप्रकाशनाददण्डनीयाः परित्यज्यन्ते । एतादृशानि स्वाभाविकानि स्खालित्यानि कथमप्यपरिहरणीयानि भवन्ती'ति । शिशुपालस्तु नैतदभ्युपजगाम । 'ब्राह्मणजातावुत्पन्नो विद्वान् कदाऽपि स्वाधिकारात्प्रमाद्यति । उच्चाधिकारिणोऽपि सापराधाश्चेन्निर्भयं परिशील्य विचार्य विमृश्य तेषां दण्डनमाज्ञापयिष्यत्येव । धनसम्पादनार्थं कीर्तिलाभलोभेन वा न्यायविरुद्धमसत्कर्म नानुज्ञास्यति ।' इति दृढमात्मनो विश्वासमाचचक्षे । आगन्तुकश्च यद्यहमेवाशोकचक्रवर्त्यभविष्यं, तर्हि, सत्यमत्र प्रतिजाने, भवन्तमेव न्यायमन्त्रिपदे नियुज्य वचसाममीषां तात्पर्यं सार्थक्यञ्च पर्यैक्ष्ये" इत्यभिधाय किमपि ध्यायन्निव विरराम । किञ्चित्कालानन्तरमुपगतनिद्रः सुखेन रात्रिशेषमतिवाह्य यत्रकुत्राऽपि प्रतस्थे ।

४

अस्मिन्दिनेऽशोकसम्राजो निदेशाक्षराणि त्वरितमानतिवान्भृत्यः शिशुपालमाशु सभामागन्तुं निर्बबन्ध । चक्रवर्तिनस्स्वहस्तलिखितमाज्ञापत्रमवलोक्य जातविश्वासस्स विप्रो भृशमनुतेपे । तादृशी तस्य देशस्याशोकाधीनस्य परिस्थितिरासीत् यत्परमतसहिष्णुरिति प्रख्यातोऽपि चक्रवर्ती निरपराधानग्रजन्मनोऽपि निरनुकम्पं दण्डयन्नासीत् । अतोऽयमतिनिष्ठुरभाषी शिशुपालोऽपि राजद्रोहापराधेनाभियुक्तं दण्डनमवाप्स्यतीति सर्वे जनास्समालोचयन् । बन्धूनां रोदनध्वानिमाकर्णयन्नेव निर्भयो विप्रकुलावतंसस्सानन्दं राजास्थानमुपाजगाम । चक्रवर्तिनमवेक्षितवतस्तस्य तेजस्विनो धीरस्याऽपि विप्रस्य मनसि भयभूतमवकाशमलभत, यतस्तस्मिन्सायंसमये सभागतादागन्तुकादभिन्नमशोकचक्रवर्तिनमसौ व्यज्ञासिष्ट ।

'भगवन् ! भवतां सत्त्वपरीक्षायै कुतूहलि मे मानसम् । न्यायरक्षणदीक्षामङ्गीकृत्य सार्थकानि निरूपणीयानि भवदीयानि सगर्वाणि वचनानि । यदि ब्राह्मणस्य तेजस्सत्यमेवाविग्रहतप्रभं प्रकाशिष्यते तर्हि भवतामधिकारस्थानाधिश्रयणेनानुगृहीतो भवति पामरोऽयं जनः । यदि तु न्यायरक्षणकार्ये भवता मप्यसमर्थत्वमेव प्रकटीभविष्यति,'' इत्यनवसितवचन एवाशोकचक्रवर्तिनि गतभीर्दृढसङ्कल्पः प्रबलेनात्मविश्वासेनोपनीतधैर्यः स्थिरबुद्धिः शिशुपालस्सगर्वमभ्यधासीत्—

राजन् ! उग्रतपःशक्तयो वयमवितथभाषिणस्सत्यप्रतीज्ञा विप्रकुलालङ्कारा नावमन्तव्याः । अतिरस्कृताश्चाधिकारस्थानान्यलंकृत्य न्यायरक्षणमपगतदोषगन्धं विदधीमहि । परीक्ष्यतां नाम कर्मण्यपि वीरस्य यज्ञोपवीतिनः शक्तिः । किमिति वृथाऽवहेलनं सहिष्यामहे '' इति । शिशुपालस्य न्यायमंत्रिपदवीदानमहोत्सवमाकर्ण्य नितान्तमानान्दिता ज्ञातयस्सर्वेऽपि विद्याभूषणमेनमभिननन्दुः ।

५

एको मासो व्यतीयाय । पाटलीपुत्रनगरे न्यायमंत्रिणः शिशुपालस्य कीर्तिगोपालाङ्गनमापण्डितं प्रससार । अल्पीयस्यप्यस्मिन्मासपरिमिते काले शिशुपालो न्यायपरतया निष्पक्षपातां वृत्तिमाश्रयन्प्रजानां मनांस्यावर्जयामास । सर्वेऽपि जनास्तमेव विप्रोत्तमं न्यायदेवताया अपरावतारममन्यन्त । अशोकोऽपि शिशुपालस्य न्यायरक्षणसामर्थ्यमवलोक्य विस्मितान्तःकरणः प्रमोदस्य परममवधिमासादयामास । एतादृशस्य कार्यदक्षस्य सामर्थ्यशालिनोऽधिकारिणो लाभात्तस्य चिन्ता दूरं निराकृता बभूव । अथाऽपि स्वयमेकवारमपरीक्ष्य परेषां वचनेषु श्रद्धावानयनुचितमित्याशिश्ये ।

तत्रावन्धकारस्सर्वत्राऽधिकारमचालयत् । कृष्णपक्षस्य चतुर्दश्यामन्धतमसस्य प्रसरणमन्यादृशं भवति । समीपावस्थितोऽपि जन्तुरदर्शनमुपयाति । अभिव्यक्तरूपाण्यपि वस्तूनि नयनशालिप्रतिघाताददृश्यान्यन्तर्धानमिव भजन्ति । हस्ते हस्तं दमाहस्यैव प्राणिनोऽन्यस्य सत्ताऽनुमेया भवति । एतादृशे गाढनमसि प्रसूने काऽपि नीलांशुकाच्छादितशरीरा करवालपाणिर्घोराकारा

करालवेषधारिणी व्यक्तिः कस्याऽपि धनिकस्य गृहद्वारमाससाद । को भवानिति पदशब्दशंकितेन दौवारिकेण पुरुषेण पृष्टा झटित्युत्तरं न प्राददात्। पुनरपि चोरशङ्कया कस्त्वमित्यनुयुञ्जानस्स खड्गहस्तो दौवारिकः सक्रोधमस्या व्यक्तेस्समीपमाजगाम । हस्तग्रहणपूर्वकमाकर्षन्स्पर्शकाठिन्यात्पुरुषोऽयमिति निश्चिकाय । अर्धरात्रे गुप्तवेषेणागतवानेष चोरसार्वभौम एवेति स्पष्टमज्ञासीत्। बलात्कारेणाकर्षन्नाधिकारिकाणां नगररक्षकपुरुषाणां सविधमुपनेतुमयतत । एतावन्तं कालं करवालमनुपयुञ्जानस्सोऽप्यागन्तुकः पुमान् प्रलोभयितुमिच्छु 'दश रुप्यकान्प्रदास्यामि, गृहेऽस्मिन्प्रविशन्तं मामनुजानीहि चोरितेषु वस्तुष्वर्धं तुभ्यमुपहारीकरिष्यामी त्यादिकमाबभाषे । कुपितस्स दौवारिकः, 'अरेरे धूर्त, किं शिशुपालस्याप्यधिकारे जागर्ति प्रलोभनोपायमवलम्बसे ? मूर्ख, यदि मया साकं नगररक्षकाणां समीपं विना प्रश्रवस्थानं मागमिष्यसि, तर्हि धिङ् नीच, न भविष्यसि ' इति वारंवारं विगर्हमाणो बलेनाचकर्ष । नानाविधानि प्रलोभनान्युपक्षिप्याऽपि तिरस्कुर्वाणमनाशृण्वन्तमाकर्षन्तं विनिन्दन्तं ताडयन्तं तं दौवारिकमवेक्ष्य किङ्कर्तव्यतामूढस्स पुमानू भृशमाचिन्तयत् । अन्ते 'रे, अहमस्मि न्यायमंत्रिणः शिशुपालस्य साक्षादौरसः पुत्रः । मामद्य न विमुञ्चसि चेदनुभविष्यसि न्यायमंत्रिणः क्रोधस्य परिणाममनिष्टफलम् " इति सक्रोधमवादीत् । एवमपि हस्तं गृहीतमविमुञ्चति तस्मिन्क्रोधानले प्रदीपिते विवेकमशेषं विलोपितवति स्वरूपविवरणभीतस्स करालवेषः पुरुषः करवालेन दौवारिकस्य शिरश्चिच्छेद । पलायमानश्च मार्गान्तरे कयाचित्स्त्रिया सविस्मयं प्रत्यभिज्ञातो वेगेन स्वगृहमगच्छत् ।

६

अशोकस्यास्थाने अवनतमस्तकः शिशुपालः किमपि ध्यायन्नतिष्ठत् । अशोकश्च कुपित इवाभिनयन्, 'किं भो ब्राह्मण, ह्यो रात्रौ निरपराधस्य दौवारिकस्य मारयिता कोवेति किं विज्ञातमित्यादीन्प्रश्नान् वारंवारमनुयुञ्जानः शिशुपालं लज्जयामास । त्रिष्वेव दिनेषु दोषिणो गवेषणायावधि रूपेणानुगृहीतेषु प्रत्युत्तरितुमशक्नुवानो लज्जितो न्यायमंत्री सभास्थानमण्डपमभ्यगच्छत् ।

निर्भाग्यस्य शिशुपालस्यापराधिनमन्वेषयतोऽकृतकृतस्य द्वे दिने व्यतीयतुः । न्यायमंत्रिणो जनानुरागपात्रस्येदृशीं दुरवस्थामालक्ष्य सर्वेऽपि नागरका भृशं विषण्णान्तरङ्गाः साहाय्यकमाचरितुमसमर्थतया तूष्णीमासत । तृतीयमेतद्दिनमन्तिममासन्नम् । यद्यस्मिन्नपि दिनेऽपराधिनः परिमार्गणं निरर्थकं भविष्यति तर्हि प्रथमत एव ब्राह्मणानवमन्यमानश्चक्रवर्ती यत्सत्यं न्यायमंत्रिणोऽसामर्थ्यमभिख्याप्य मरणदण्डमाज्ञापयिष्यति । 'हा हतविधे ! किमेतदनिष्टमापतितम् । कथमसौ न्यायपक्षपाती गुणशाली शिशुपालस्सम्राजः क्रोधेन नाभिभविष्यते' इति चिन्ता नागरकानहर्दिवमबाधत ।

तृतीयस्य दिनस्यावसानसमयः । सायं षड्वादनसमये राजसभा प्रचलिष्यति । तत्र सर्वे नागरकप्रमुखास्समागमिष्यन्ति । अस्यामेव सभायामपराधिनो विचारणं न्यायमंत्रिणा कर्तव्यमिति राजाज्ञा । केवलमर्धघण्टामात्रमवशिष्टमस्ति दण्डनीयस्य विना कारणं दौवारिकघाती नीचः को वेति न विज्ञातम् । चिन्ताभारदूयमानमानसो न्यायमंत्री प्रतिज्ञानुसारेण मरणदण्डं प्रतिग्रहीतुं सभामागच्छन्नास्ति । मध्येमार्गमेव काचित्स्त्री कथङ्कथमपि जनसंमर्देऽवकाशमुपलभ्य गुप्तमेव पत्रमेकं शिशुपालस्य हस्ते न्यक्षिपत् । पत्रमुद्घाट्य वाचितवान्न्यायमंत्री सद्यस्सम्भृतहर्षः प्रसन्नवदनः सभामण्डपं प्राविक्षत् । तस्याकस्मादुपनतं मुखचर्याविपर्यासमालक्ष्य विस्मितास्सहागामिनो नागरकाः किमधुना भविष्यतीति कुतूहलसहकृतया जिज्ञासया प्रोत्साहिता अहमहमिकया सभामन्दिरमवागाहन्त ।

'भगवन् ! किमन्विष्टोऽपराधी, गृहीतश्च ?' अशोकस्य प्रश्नस्सपदि सभायां संमिलितान्सर्वानपि नागरकान्मौनव्रतमग्राहयत्; शिशुपालस्तु स्वासनादुदस्थापयत् ।

'राजन्, अपराधी विज्ञातः । कारणान्तरेण नाद्यापि गृहीतः'

"यद्येवं स यत्रकुत्राऽपि भीतः पलायेत । अनन्तरं वा तस्य ग्रहण-

मतीव दुष्करमापद्येत। किमित्यसौ न गृहीतो न च निगृहीतः ?"

"राजन्, स तावदपराधी सभायामस्यामेवोच्चासने विराजते। न हि स कुत्राऽपि मां वञ्चयित्वा पलायितुं समर्थः।"

"एवन्तर्हि सभायामस्यां नागरकसमक्षमसौ गृह्यताम्"

"यद्देव आज्ञापयति। धनमित्र, गृह्यतातामपराधी"।

धनमित्रश्च न्यायमंत्रिणस्सङ्केतमनुरुध्य सिंहासनसमीपमगमत्। अशोकचक्रवर्तिनं हस्ते गृहीत्वा शृंखलया बध्नाति स्म। अमात्याः सकोपं न्यायमंत्रिणं प्रहर्तुमुदयतन्त। अशोकस्तु न्यायमंत्रिणो निर्भीकतां न्यायपरताञ्च प्रशंसन् मंत्रिणो न्यरौत्सीत्। न्यायमंत्रिणो निदेशेन न्यायाधिकरणमानीतोऽशोकचक्रवर्ती विना कमपि प्रतिवादमङ्गीचकार स्वापराधम्। न्यायमंत्री च विनापक्षपातं 'रक्तेन रक्तस्य प्रतिशोधः' इति नियमनुसृत्याशोकचक्रवर्तिनोऽपि मरणदण्डमाज्ञापयामास। नागरकास्सर्वेऽपि प्रक्षुब्धचेतसो न्यायमंत्रिणं विजगर्हिरे। सर्वत्र च प्रचचार कोलाहलः। ईदृश्यामवस्थायां न्यायमंत्री गम्भीरघोषेणोपन्यास्थात्—

"नागरका भ्रातरः। अशोकस्य चक्रवर्तिनोऽपराधोचितो दण्डो मया विधेय एव। अथाऽपि देवतांशस्य तस्य साम्राज्याधिपतेरस्माकं शासकस्य शासनं तदधीनेनाधिकारिपरमाणुना मया न शक्यम्। तस्मादशोकचक्रवर्ती सापराधोऽपि विना शिक्षां परित्यज्यताम्। तस्य स्वर्णप्रतिमा तावदेका विनिर्मिताऽपराधिनः प्रातिनिध्येन मरणकाष्ठमवलम्बताम्। निरपराधस्य दौवारिकस्य मारणमपराधरूपमशोकेनाचरितमिति जोघुष्यतां प्रतिचत्वरमधिकारिभिः। एतेन न्यायरक्षणमपि सुशकमभिसंहितम्। भवतामुद्वेगः प्रशाम्यतु"।

आकर्ण्य न्यायमंत्रिणो निर्णयं भित्तौ चित्रित इव नागरकसमुदायो विस्मयस्तिमितचेष्टस्तूष्णीमवर्तत। अशोकचक्रवर्ती च प्रमोदस्य पारमनधिगच्छन्सर्वेषां समक्षमेव न्यायमंत्रिणमाश्लिक्षत्।

---

मधुरवाण्याः सुभाषांकमवलोक्य "पुरुषार्थ" कृतम्

# स्वागतम्

इदानीन्तने समये संस्कृतभाषायां मासपत्रिकाप्रकाशनरूपं हि कार्यं कीदृग्-साध्यमिति निरूपणमनावश्यकमेव। प्राक्किल संस्कृतभाषा अखिलेऽपि भारते राष्ट्रभाषा आसीत्। अधुनापि सा सर्वेषामपि भारतीयानामादरणीया राष्ट्रभाषा धर्मभाषाचाप्यस्ति। संस्कृतभाषाभिज्ञः पुरुषो यत्र कुत्रापि हिंदुस्थाने गतश्चेदपि स्वस्य मनोगतं विषयं तत्रस्थानां अवगमयितुं शक्नोति। इयान् संस्कृतभाषायाः प्रभावः अखिलेऽपि भारते सर्वास्वपि विविधासु प्रान्तीय-भाषासु समाक्रान्त इत्येवमद्यापि सर्वथा दृष्टिगोचरो भवति। संस्कृतभाषामन्तरा कस्या अपि वा प्रान्तीयभाषाया उन्नतिर्भवितुमशक्या एव। महाराष्ट्र्यां— हिन्द्यां—बंगीयायां पंचांबुविभागीयायां वा भाषायां शतेषु अशीतिशब्दाः संस्कृतमयाः संस्कृतोद्भवाश्च सन्ति। सर्वासामपि प्रान्तभाषाणां जन्मदात्री संस्कृतभाषैवास्ते। एतावदेव न माहम्मदानां पर्शियन्भाषाया अपि जननी सा एव। एतस्याः संस्कृतभाषाया विषये सर्वेषामपि भारतीयानां प्रवृत्तिरधि-कतया सर्वथा आवश्यकी वर्तते।

परं दौर्भाग्यं यदस्या भारतमातुर्विषये सर्वेषामपि दृष्टिरल्पाल्पा भवितुं प्रवृत्ताच। एतत्परिणामः प्रान्तीयभाषाणां ह्रासाय भविष्यतीतितत्स्पष्टमेव। अतो विश्वविद्यालयैरेतत्संस्कृतभाषाविषये अवश्यमवधानं देयम्। परमत्र येषां हस्ते प्रभुत्वं ते संस्कृतविमुखा इत्यतःकारणात् प्रतिदिवसं शिक्षणविभागात् संस्कृतभाषा ह्रसितुं प्रवृत्ता च। इदमेव दौर्भाग्यम् हिन्दूनाम्।

ईदृशेषु भयंकरेष्वपि दिवसेषु ये विद्वांसः संस्कृतोन्नतये प्रयतंते ते महदेव राष्ट्रहितं कार्यं कुर्वंतीत्यत्र न सर्वथा शंका। एतादृशेषु विद्वत्सु पं. गलगलीरामाचार्याणां तथा पं. बुर्लीश्रीनिवासाचार्याणां च गणना युज्यते। सर्वे हिन्दवः विशेषतश्च ये हिन्दुसंस्कृतिविषये आदरभाजश्च ते यदन्याहृतं

द्वादशवर्षपर्यन्तं प्रशंसनीयमुत्तमं कर्मकुर्वन् तद्विषये कौतुकमेव कुर्युः । यथार्थतः आर्थिकहानिं सोढ्वा सहस्राधिकं ऋणभारमुदूह्य भारतभारत्यास्सेवामखण्डितं यथा यद्द्वादशवर्षपर्यंतमकुर्वन् ।
एतदर्थं सम्पादकद्वयमिदं प्रशंसार्हम् ।

एतदर्थं केवलं शब्दैः प्रशंसामात्रेण कार्यं न भवति । केवलं प्रशंसया न ऋणभारोल्पीभवति । तस्माद् येषां यावती शक्तिरस्ति तावत्या आर्थिकं साहाय्यमनुष्ठाय सहृदयतया कौतुककरणमुचितं स्यात् ।

विद्वत्कुटुम्बानि स्वगृहे संस्कृतविद्यापरम्परा चिरस्थायिनी भवेदित्यपेक्षया **मधुरवाण्या** ग्राहकाः भवन्तु । महाराष्ट्रे एतादृशानि सहस्राधिकानि कुटुंबानि स्युर्येषां प्रतिवर्षं रूप्यकचतुष्टयस्य मूल्यं नाम न विशिष्टं भवेत् । एतादृशानि सर्वाणि कुटुम्बानि मासिकस्यास्य प्रतिहस्तमवश्यं ददतु ।

क्षुद्रमनोरंजकानां मासिकानां ग्राहकत्वमंगीकुरुतेत्यावेदनमनावश्यकम् । स मानवस्वभावः । पतनं सहजमेव । परमारोहणं दुष्करं भवति । तत्प्रयत्नेन करणीयं भवति । तस्मात् वाचकेषु वयमाग्रहपूर्वकमावेदयितुमपेक्षामहे यदेतस्य मासिकस्य अवश्यं ग्राहका भवंतु । इष्टान् मित्राणि च ग्राहकत्वमंगीकर्तुं प्रोत्साहयन्तु ।

एवं विलिख्य मधुरवाण्या माधुर्यमुपदर्शयितुं सुभाषणगतानि कानिचिद्वाक्यान्यत्रोदाहरन् ।

( पुरुषार्थाभिधं मासिकं पुस्तकं औन्धसंस्थानतःबृहदाकारं प्रकाश्यते । वार्षिकं मूल्यमस्य रूप्यत्रयम् । सम्पादका अस्य सुप्रसिद्धाः विद्वद्वराः श्रीपाददामोदरसातवळेकरमहाभागाः संति ।)

---

पुणेटिळकमहाराराष्ट्रविद्यापीठम्

# संस्कृतपरीक्षाविषये स्पष्टीकरणम्

टिळकमहाराष्ट्रविद्यापीठे वत्सरेऽस्मिन् जूनमासे संस्कृतप्रवेशपरीक्षा प्रवर्तनीया इति प्राङ् निर्णीता आसीत्। परं विद्यार्थिनां अभ्यासार्थं समय अल्पीयान् भवतीति परीक्षेयं अक्टोबरमासे प्रवर्तनीया इति निरधारयाम।

संस्कृतविद्यापरिषदा प्रवर्तितं कार्यमिदं टिळकविद्यापीठस्यापि उद्दिष्टमेवेति तथा तत्सदक्षया सुप्रतिष्ठितया संस्थया प्रवर्तितं चेत् शाश्वतं निश्चितस्वरूपं लोकविश्वासपात्रं अधिकसहकारिसंघटितं च भवेदिति विज्ञाय परिषत्प्रस्तावमनुसृत्य टि. म. विद्यापीठसात्कृतमस्माभिः। अर्थादित आरभ्य प्राथमिकी क्रमिक संस्कृतपरीक्षा टि. म. वि. पीठादेव प्रवर्त्स्यते। प्राक् यथा प्रकटितं तदनुसृत्य संस्कृते प्रथमा द्वितीया तृतीया वा अपि परीक्षा प्रतिवत्सरं जुलै १९-२० दिनांकद्वये प्रवर्त्स्यते। एतस्मिन् परीक्षाकार्ये पूर्वतनानां चालकानां अपि संपूर्णं सहकार्यं विद्यापीठेन गृहीतमेव। सर्वे केन्द्रव्यवस्थापकाः संस्कृताध्यापका हितचिंतकाः परिषदीव विद्यापीठेपि सहकार्यं कुर्वंतु इति विज्ञापयामहे। एतासु संस्कृतप्रथमा-द्वितीया परीक्षयोः उत्तीर्णेभ्यो विद्यार्थिभ्यः गुणानुक्रमेण प्रथमाय (२५) रूप्यकाणि द्वितीयाय १५ रूप्यकाणि तृतीयाय च १० रूप्यकाणि च पारितोषकदानं निर्धारितम्। तृतीयापरीक्षायां तु प्रथम-द्वितीययोरनुक्रमेण २५ रु. १५ रु. पारितोषिके दीयेताम्।

इतःपरं एतत्संबंधि सर्वं पत्रव्यवहारादिकम् "कार्यवाह. टिळकमहाराष्ट्रविद्यापीठ ५२१ सदाशिवपेठ पुणे २" इति संकेतेन कर्तव्यम्।

वा. वा, भागवत
सहकार्यदर्शी
संस्कृतपरीक्षामण्डल

वा. वा. अतीतकर
कार्यवाह
टिळकमहाराष्ट्रविद्यापीठ

# स्वप्नवासवदत्तम्

ले.—आस्थानविद्वान् वे. एम्. जी. नञ्जुण्डाराध्यः
साहित्याध्यापकः श्रीचामराजेन्द्रसंस्कृतकॉलेज बेंगळूर.

---

गतेंके प्रकाशितात् सन्दर्भादुत्तरो विषयः पद्मावत्याः समीपे वासवदत्तान्यसनविधिमारभ्य तृतीयांकसमाप्तिपर्यं यावत् अस्मिन्नंके प्रकाशित इत्यवधेयम् ।

---

कन्यान्यसनविधि :, नाधिकारदर्पभूयिष्ठे राजस्थाने प्रचलति; किन्तु प्रशान्ततपोवने । पक्वफलानि कल्पकुजसकाशाद्यथा पतन्ति, तथा "यद्यस्यास्ति समीहितं वदतु, तत्कस्याद्य किं दीयताम्" इत्यादिष्टायाः उदारशीलायाः पद्मावत्यास्सन्निधौ कंचन आगन्तुकं विहाय 'सन्तुष्टतपस्विजनमिदमाश्रमपदम् ।' स्वयं पराधीना पद्मावती सदृशी कन्या, अपरिचितकुलशीलां कांचिद्युवतिं कथं वा न्यासीकर्तुं समर्था भवेत् ? इति संशयवारणाय पद्मावती स्ववचनेनैव बन्धिताऽभवत् । 'महती खल्वस्य प्रार्थना । अर्थ—प्राण—तपः-प्रभृतिदानादपि दुष्करतरं न्यासरक्षण'मिति कंचुकिना सूचिताऽपि राजसुता यथाश्रुतमनुतिष्ठति । सत्यशीलायास्तस्याः अनुगुणमेवैतत् । तपस्विजनेष्वपि तस्याः भक्तिरन्यादृशी । तेषां अभ्यर्थना 'स्वानुग्रहाय ।' स्वस्याः 'तपोवनाभिगमनं दिष्ट्या सफलम् ।' इति तस्याः आन्तरिकी अपेक्षा । अयं च तपोवनाभिलाषः तस्याः अनुवंशिकः, इदानीमपि तन्माता तपोवने निवसति । क्षणपरिचितायाः विषयेऽपि महानादरः । 'आत्मीयेदानीं संवृत्ता' इति गुणवती श्वश्रूः स्नुषां यथा स्वीकुरुते तथेयम् वासवदत्तासुस्वागमनभिलषति । 'परपुरुषदर्शनं परिहरत्यार्या । सुपरिपालनीयः खलु मन्न्यासः' इति तद्योगक्षेममभिचिन्तयति । लावाणकग्रामादागतात् ब्रह्मचारिमुखात् 'ततस्तस्याः (वासवदत्तायाः) शरीरोपभुक्तानि दग्धशेषाण्यप्याभरणानि परिष्वज्य राजा मोहमुपगतः' इति विज्ञाय, शून्यमिवाऽभवत्तस्याः

हृदयम् । पट्टमहिषी भूत्वा अप्रतिहताज्ञाऽपि सम्मानितयौगन्धरायणवचना उन्मनायमानमानसा भर्तृवियुक्ता सती साधारणब्राह्मणीव तत्राऽगता वासवदत्ता। 'अतिथीनां स्वगृहायमाने आश्रमगृहे' राजभटैरुत्सार्यमाणां स्वकीयावस्थां विचार्य, 'अहमपि नामोत्सारयितव्या भविष्यामीति' सन्तपति । यौगन्धरायणस्तु समाधानाय 'एवमनिर्ज्ञातानि दैवतान्यपि अवधूयन्ते' । 'भुक्तोज्झितएव विषयोऽत्रभवत्या' । 'चक्रारपंक्तिरिव गच्छति (तव) भाग्यपांक्तिः' । इत्यादिसुभाषितैस्सान्त्वयति ।

एवं परस्परावमाननदुर्मनायमानौ वासवदत्तायौगन्धरायणौ, तपोवने 'धर्मप्रियायाः' पद्मावत्याः वृत्तमशृणुवताम् । 'पुष्पकभद्रकादिभिरादिष्टं स्वामिनो देवी भविष्यतीति' स्मृत्वा. वासवदत्तायाः पद्मावत्यामात्मीयता जाता । पद्मावत्यास्तु 'भगिनिकास्नेहोऽपि उदपद्यत । सुमुखे तयोः मनः प्रवृत्तिसमये, पद्मावती रङ्गं प्रविशति । 'अभिजनानुरूपं तस्याः रूपं' वासवदत्तयाऽपि श्लाधितम् । 'न हि रूपमेव, वागपि खल्वस्या मधुरा' । अत एवास्या मात्मीयता समजनि वासवदत्तायाः । आश्रमवासिनी तपस्विनी तामनुनीय, तस्याः विवाहप्रस्तावं उन्नयति । चेटी 'राजा प्रद्योतो नाम स दारकस्य कारणात् दूतसम्पातं करोतीति' प्रतिवक्ति स्वपितुः प्रद्योतस्य नामश्रवणात् वासवदत्तायाः पद्मावत्यां आत्मीयता समुदेति । तेन वासवदत्तायै पद्मावत्याः सामीप्यं रोचते ।

इदानीं प्रतिथिशेषणार्थं वत्सभूमौ लावाणकग्रामवास्तव्यो ब्रह्मचारी तत्राऽगत्य 'मृगयानिष्क्रान्ते राजनि, लावाणकग्रामदाहेन वासवदत्ता दग्धेति आचक्षे । संग्रहेण वासवदत्तावत्सराजयोः लोकोत्तरं प्रेम, यौगन्धरायणरुमण्वतोश्च प्रभुभक्तिः, स्पष्टीभवति । प्रेयस्याः वासवदत्तायाः दाहवृत्तं श्रुत्वा, 'तद्वियोगजनितसन्तापः तस्मिन्नेवाग्नौ प्राणपरित्यक्तुकामो राजा अमात्यैर्महतायत्नेन वारित इति' श्रुत्वा वासवदत्तायाः हृदयं स्वस्यस्थानपरिज्ञानविहीनं सन्तप्यते । बहिस्सन्तापमभिव्यञ्जयितुमसाम्प्रतमिति मूकव्यसनमनुभवन्त्यां तस्यां, ब्रह्मचारिमुखात् उदयनस्य गुणकथनं श्रुत्वा, तत्पक्ष-

पातबुद्धया तापस्यादीनां मनसि ', किं नु खल्वपरा स्त्री तस्य हस्तं गमिष्यति" इति समस्या समुदेति । तदैव तस्याः विवाहप्रस्तावोन्मेषात् पद्मावत्याः अपि ' मम हृदयेन सह मन्त्रितमिति ' स्वपाणिग्रहणाभिमुखं भवति मनः । परन्तु इमं वृत्तं गम्भीरया रीत्या आत्मगतमिति निर्दिशति कविः ।

एवं प्रथमाङ्के कविः नाथदर्शनात्पूर्वमेव, नायिकायाः हृदयभूमिकां संस्कृत्य अनुरागबीजमावपति । अन्ते पद्मावती वासवदत्ताभिवन्दनसमये तापसी, 'जाते ! त्वमप्यचिरेणैव भर्तारं समासादय' इति वासवदत्तां चाशास्ते। तापस्याः वचनं कथमन्यथा भवितुमर्हेत् ।

द्वितीयतृतीयाङ्कौ प्रथमाङ्कापेक्षया कनीयांसौ । अङ्कद्वयं च प्रथमाङ्कस्यार्ध—परिमितिं लभते । निर्यथकेन प्रवेशकेन द्वितीयाङ्कः प्रारभ्यते । पद्मावती—वत्सराजविवाहप्रस्तावेनायमङ्को विरमति । अङ्कारम्भे पद्मावती कन्दुकेन क्रीडन्ती प्रविशति । वासवदत्तात्वत्र पद्मावतीं सरसरमणीयैर्वचोभिः सम्मोदयन्ती तस्यां वत्सराजानुरागमुद्दीपयितुमुद्युङ्क्ते । कन्दुकक्रीडाव्याजेन प्रस्तुते वत्सराजवृत्तान्ते— चेटी:—"वत्सराजः दयालुः प्रणयशीलश्च । तस्य गुणान् भर्तृदारिकाभिलषतीति सूचयति । भर्तुः प्रशंसाकर्णनेन वासवदत्तायै रोमहर्षः प्रजायते । चेटी—" यदि स राजा विरूपी भवेदिति अनुयुङ्क्ते श्रुत्वैतद्वाक्यं वासवदत्ता असहनीयवेदनामनुभवति । भर्तृपक्षपातेन आत्मनो स्थानादिकमपि विस्मृत्य— " नहि, नहि, दर्शनीय एवे"ति उत्तरयति । तदा तु प्रेक्षकाणां—यदि सर्वं रहस्यं प्रकटीभवेदिति संशीतिरुपजायते । उज्जयनीयो जन एवं मंत्रयते । इति श्रुत्वा पद्मावती— " युज्यते । न खल्वेष उज्जयनीदुर्लभः। सर्वजनमनोभिरामं खलु सौभाग्यम्। इत्यनुमनुते ऋजुस्वभावायाः पद्मावत्याः उचित एवाऽयं तर्कः, अन्यथा वासवदत्तायाः अनेन वचनेन ईर्ष्याप्युत्पद्येत । सन्निवेशाश्च एवंविधाः नाटकेऽस्मिन्ननेकशः दरीदृश्यन्ते । कथाफलस्वरूपान् स्वारसिकान् निर्माय सन्निवेशांश्च रसमुत्पादयति सुनिपुणोऽयं कविः । बालतृणादि सादरमाहृत्य परितोषणन्तु गवां तासां स्तनेभ्यः दुग्धदोहनायैव । विना सरससन्निवेशान् शकटाद्याकर्षणाय विरिपोष्यमाणा वन्ध्या गौरिव नाटकं नीरसं भवेत् ।

पात्राणां गुणविशेषाभिव्यञ्जनन्तु एवंविधसन्निवेशेष्वेव विलसति । फलवृक्षादीनां गरिमा कुसुमफलादेस्समुदये यथा प्रकाशते तथैव नराणामपि योग्यतासिद्धिः तेषां सङ्कटसन्निवेशेष्वेवाभिव्यज्यते । प्रभुभक्त्या धर्मपक्षपातेन च अलंकृतस्य राजकारणपटोर्यौगन्धरायणस्य स्वभावः; भर्तुरभिमताया अपि तन्मङ्गलाकांक्षिण्याः, सपत्नी—सहवासमङ्गीकृत्य पद्मावतीदर्शनादारभ्य तस्यां भगिनीप्रेम दर्शयन्त्याः वासवदत्तायाः स्वभावः; सुन्दर्याः ऋजुशीलाया अपि द्वितीयकलत्रस्य समवधानावस्थायामपि ज्येष्ठभार्यामनुक्षणं संस्मृत्य दुःखितस्य वत्सराजस्य च दाम्पत्यप्रेमाभिव्यञ्जनं च एतादृशेषु मधुरसन्निवेशेष्वेवोल्लसन्ति ।

एवंविधान् सुसंघटितान् सन्दर्भान् निर्माय वृत्तान्ताद्वृत्तान्तर मुत्प्लवते कविः । एते घटना विशेषाः यदृच्छया अनिरीक्षिताश्च सम्भविष्यन्ति । वत्सराजस्य विवाहोऽपि एवंविधेषु संस्मार्यते । पद्मावतीवासवदत्ताभ्यां अर्धहास्यघटितविवाहवार्तायाः सम्भाषणावसरे तत्र आगत्य धात्री— "भर्तृदारिके, दत्तासि" इति वदति ।

वासवदत्ता:—"आर्ये, कस्मै ?

धात्री:—वत्सराजायोदयनाय ।

वासव.—अपि कुशली स राजा ?

तत्समयेऽपि वासवदत्तायाः महाराजस्य क्षेमसञ्चिन्तनमेव, न तु सपत्नीविचारस्तद्बुद्धिमारोढुमीष्टे ।—'कुशली स आगतः । तस्य भर्तृदारिका प्रतीष्टा च' इत्यत्र भर्तृदारिकाप्रतिग्रहणमेव मुख्यो विषयः । आत्मानमपि विस्मृत्य वासवदत्ता 'अत्याहितम्' इत्युक्त्वा, सुनिपुणमापदसकाशान्-सन्तीर्यते । चेट्या—'अन्यप्रयोजनेनेह आगतस्य, अभिजनविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्तेत्युक्ते तस्याः समाधानमपि । अद्यैव शोभनं नक्षत्रम् । अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भट्टिनी भणती'त्यादिना चेटी यथा यथा त्वरते तथातथा अन्धीभवति वासवदत्तायाः हृदयम् ।

तृतीयाङ्कस्तु 'अत्याहितेनैव' (अन्यायेनैव) प्रारभ्यते। वासवदत्तायाः अपि गुणवत्याः प्रेयसो भर्तुः अन्याभिराक्रमणमभिवीक्षितुं न शक्यते। अतः सा 'विवाहामोदसंकुलां अन्तःपुरचतुश्शालां परित्यज्य पद्मावतीं च प्रमदवनमागता। 'भागधेयनिर्वृत्तं दुःखं विनोदयितुं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियंगुशिलापट्टके उपविशति।' 'आर्यपुत्रं पश्यामीत्यनेन मनोरथेन' 'प्राणपरित्यागेच्छां परित्यज्य' जीवितुमिच्छति मन्दभाग्या। एतद्दुःखाग्निसंज्वलनायैव चेटी, 'अवन्तिकन्यायाः' वर्णमालिका–(कौतुकमालिका)–संग्रथनायागच्छति। 'एतदपि मया कर्तव्यमासीत्' इति परितप्यते तस्या हृदयम्। तावतैव न मुञ्चति चेटी। 'भेदानीं अन्यच्चिन्तयित्वा। एष जामाता मणिभूम्यां स्नाति। शीघ्रं तावद्गुम्फत्वार्ये'ति त्वरयति। एतन्मध्ये वासवदत्तायाः भर्तृवृत्तान्तश्रवणकुतूहलमपि परिबाधते। अत एव चेटीं—'कीदृशो जामाता' इति पृच्छति। सा च चेटी एकदैवोत्तरमदत्वा 'नेदृशो दृष्टपूर्वः' इत्युत्तरयति। एतावता न तृप्तमस्याः मनोरथः 'भण भण दर्शनीयः' इति त्वरया पृच्छति।

'सपत्नीमर्दनं' विहाय 'अविधवाकरमूलिकां' संग्रथ्य, चेट्याः सन्देहो यथा नोदेति तथा चातुर्येण निर्माति। अस्मिन्नेव समये अन्या चेटी आगत्य मालायै त्वरति। अस्याः आगमनसमयेतु 'जामाता अविधवाभिरभ्यन्तरचतुश्शालं प्रविशति'। परिसमाप्तश्च भवेद्विवाहः। तस्य वर्णनं न दृश्यते। द्वितीयविवाह इति सर्वः संग्रहेणैव समापितो वा भवेत्।

---

पुण्यपत्तनम्
२ सदाशिवपीठम्
गृहांकः ९४५

श्रीगजाननः प्रसन्नः

# गीर्वाणवाग्वर्धिनी सभा

## पुण्यपत्तनम् ।

आषाढे १८६९ शके शुदि एकादश्यां सायं पंचवादनावसरे पुण्यपत्तनस्थायाः गीर्वाणवाग्वर्धिन्याः सभायाः पंचदशवार्षिकमहोत्सवः महता प्रमोदेन संवृत्तः । प्रथमतस्तावत् श्री. मुकुंदरायगोखलेमहोदयाः श्रुतिमधुरेण संस्कृतपद्येन सर्वेषां स्वागतं व्याहरन् । ततः पंडितरानडेपुरुषोत्तमशास्त्रिणः ललितमधुरया वाण्या सर्वेषां सभ्यानां स्वागतं व्याहृत्य अद्यतनं अध्यक्षपदं विद्वद्धुरिणैः व्याकरणादिशास्त्रकृतभूरिपरिश्रमैः पंडितश्रेष्ठैः शंकरशास्त्रिमारुलकरमहोदयैः सुभूषितव्यम् इति समसूचयन् । तच्च वैद्यराजआपटेत्र्यंबकरायाः सर्वेषां कृते अन्वमोदन्त । ततः स्थानापन्नेषु अध्यक्षमहोदयेषु शंकरशास्त्रिषु तान् पुष्पहारेण गुच्छेनच अपूजयन् रानडेपुरुषोत्तमशास्त्रिणः। ततः आ. आ. देशपांडे पांडुरंगशास्त्रिणः संदेशं अवाचयन् । बहवः आसन् संदेशाः पं, राजेश्वरशास्त्रिप्रभृतीनां पंडितश्रेष्ठानां तथा पंतप्रधानबाळासाहेब खेरप्रभृतीनां राज्यशासकानाम् । ततः व्याकरणकोविद शेण्डेगणेशशास्त्रिणः सभायाः पंचदशवार्षिकं वृत्तन्तं न्यवेदयन् । ततः मीमांसाविद्वान् पंडितसुब्रह्मण्यशास्त्रिणां तथा गोविंदरायभागवतमहोदयानां भाषणं समभूत् । ततश्च पंडितश्रेष्ठानां अध्यक्षमहोदयानां शंकरशास्त्रिणां :विचारपरिप्लुतं सुमधुरं भाषणं समभूत् । ततः डॉ. वाटवे केशवरायाः हास्यविनोदपूर्णेन वचनेन सर्वेषां सभ्यानां वक्तॄणां अध्यक्षाणां साहाय्यकर्तॄणां च उपकृतिं उदघोषयन्। समनंतरं पूगपुष्पिकादिदानेन होराद्वयं प्रचलितः अयं समारंभः पूर्णोभूत् । इति शम् ।

व्याकरणकोविदशेण्डेगणेशशास्त्री ।

# बाल्येऽपि व्यक्तिमायाति सात्विको गुणः

ले,—पं. सौ. क्षमादेवीराव मुम्बई ( मरीनलेन ३७ )

आसीत्पञ्चवर्षदेशीया सा बाला। आप्रपदीनं शोणमन्तरीयं परिधाय प्रतनुराङ्कवेण प्रच्छन्नवक्षोभुजांसा कस्यचित्कान्दविकस्य निषद्यां विविधलड्डुकमोदकादिमधुरभक्ष्यैर्विचित्रविन्यासप्रसारितैः समुपेतां विलोकयन्ती रथ्यायां मुहूर्तमस्थात्। मुष्टिबद्धमाणकद्वयं पुनः पुनर्निरीक्षमाणा तदापणपार्श्वमुपागमत्। भक्ष्यपूगादेकैकं पश्यन्ती सांगुलिनिर्देशं विक्रयिकमपृच्छत्—"भद्र कियन्मूल्योऽयं लड्डुक" इति। "षडाणका इति सोऽब्रवीत्। ततश्च चक्राकारं जिलेबीनामकं भक्ष्यमुद्दिश्य अस्य मूल्यं कियदिति पुनरन्वयुंक्त। अष्टाणका इति प्रत्यवोचदापणिकः। अपि यत्किञ्चिदाणकद्वयेन लभ्यमिहास्तीति कातरस्वरेण पुनरमार्गत्किशोरी। आपणिकस्तावदुन्नसीभूय निरादरस्तूष्णीमतिष्ठत्।

अत्रान्तरे महानर्भकसमूहः प्रतिवेशमन्दिरेभ्यो निष्पत्य रथ्यायां प्रचलितुमारब्धः बालिका पुनराणकद्वयेन किन्नु क्रीणीयामिति चिन्तयन्ती निषद्यायाः पुरतः स्थितवती। अथ केसररञ्जितपायसखण्डं निर्दिश्य कियन्मूल्यमिदमिति वणिजमपृच्छत्। स तु स्मयमानः पराङ्मुखोऽभवत्। तत्क्षणं

रथ्यायाः पर्यन्तदेशादश्रावि कस्यचिद्गीतध्वनिः। बालिका च मुष्टिपीडमाणकद्वयं दधाना ततोऽपक्रम्य गीतस्थानमुपधाविता। तत्र पंगुमेकं युवानं पीठिकामवलम्ब्य स्थितं कलमधुरस्वरेण गायनमानमपश्यत्। तमेनं परितः समूहशस्तिष्ठन्तो बालकाः कुतूहलाक्रान्ता आकर्णयन्ति स्म। बालिका च निकटीभूय गीतिकामशृणोत्। पर्यवसितप्राये च गीते बालवृन्दस्य मध्यात्पंगुमुपसृत्य तन्मुखमेव क्षणमवलोकयती तूष्णीमतिष्ठत्। ततश्च निजसंकल्पवशात् अभिरोचमानमुखी स्मयमाना मुष्टिगतमाणद्वयं गायकस्य हस्ते समर्प्य स्वमन्दिरमगात्।

श्रीहरिः शरणम्

मुम्बपुर्यां

# अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम्

तथा

# अ. भा. संस्कृतसाहित्यविज्ञानप्रदर्शिनी

( १९४७ आक्ताम्बरमासे )

सहस्रवत्सरेभ्यः प्रागुड्डयन्ते स्म भारतीयानां विमानानि विहायसि । तै प्रयाणसौकर्यमुखमन्वभवन् विविधकलामातृभवनायमाने भारते भाग्यशालिनो जनाः । अयुध्यन्त च प्रतिपक्षिभिः समं व्योमयानारूढाः शूराग्रेसरा भारतीयाः। साहसिका वणिजश्च विहरन्तः सागरवक्षस्स्थले जलयानैर्द्वीपाद्वीपमटन्ति स्म निश्शङ्कम् । नैककलाकलापकुशलाःभारतीयाः प्रासारयन्नात्मीयकलादिविज्ञानम् ।

तदानीन्तना भारतीया न केवलम् अग्न्यस्त्र—वायव्यास्त्र—पर्वतास्त्र—मेघास्त्र— मोहनास्त्रादिभिरमोघैरद्भुतैर्विविधैरस्त्रैर्व्यस्मापयन् पराजयन्त च विदेशीयान् वीरानपि वसुधाधिपान्, अपितु विषमपरिस्थित्यतिरिक्तप्रसङ्गे कदाप्यनुपयुज्यमानानि 'अणुबाम्ब (अटम् बाम्ब) तोऽप्यतिभयङ्कराणि नारायणास्त्र—पाशपतास्त्र—ब्रह्मास्त्रादिमहास्त्राणि प्रयुञ्जते स्म प्रसङ्गविशेषे ।

शास्त्रचिकित्साचतुरास्तु भारतीया न केवलं भग्नास्थीन् पाणिपादाद्यवयवान् समीकुर्वन्ति स्म किन्तुच्छिन्नानपि पुनर्यथापूर्वं सन्दधतेस्म । इयदेव न, च्छिन्नस्याऽपि शिरसः पुनस्सन्धानप्रावीण्यमवाप्नुवंस्ते । अस्मदीयं भारतं रसायनविद्या — स्थापत्यकला — भूत — भविष्यद्वर्तमाननिदर्शज्योतिश्शास्त्राणामुगमस्थानमासीत् । किंबहुना, युरोपामेरिकाविज्ञैस्संप्रति या ज्ञान—विज्ञान-

समुन्नतिर्विहिता, ततोऽप्यनन्तगुणितामधिकोन्नतिं प्रत्येकस्मिन् विषयेऽपि पञ्चसहस्त्रवर्षेभ्यः प्रागेव विधाय निखिलजगद्गुरुतां प्राकाशयन् मेधाविमूर्धन्यमणयः प्रतिभाप्रभाभासुरा भारतीयाः । तदा युरोपीया जनता वस्त्रपरिधानमपि न जानीतेस्म ।

अत्रैते प्रश्नाः उपस्थास्यन्ति—"इमाः सर्वा विद्याः, कलाश्च किं लुप्ता एव भारते सर्वथा, लुप्ताश्चेत् कुतो वा कथं वे'ति । एतदुत्तरदाने—महाभारतसंग्रामोत्तरसमये समुत्पन्न परिस्थितेः वैदेशिकाक्रमणेन समुद्भूताविचित्रघटनायाश्च प्रदर्शनाय वृथाकालव्ययमकृत्वैव स्पष्टं घोषयामो वयम्—

**"इमाः समस्ता अनवद्या विद्या, अखिला दृष्टादृष्टाः कलाः विज्ञानं** [सायन्स] **चास्माकं वेदेषु, शास्त्रेष्वितरसंस्कृतग्रन्थेष्वद्यापि विद्योतन्ते** इति । परम् अमूल्यग्रन्थरत्नकोशस्यास्य (संस्कृतसाहित्यस्य) वैज्ञानिकदृष्ट्या निरीक्षणमावश्यकं जर्मनादि युरोपीयसंशोधकानामिव भारतीयानाम् । अस्तु ।

एतन्महाकार्यसिद्धये कार्योपक्रमोऽपि सञ्जातः । श्रुत्वेदं प्रसन्नाभवेयुर्भवन्तः—

**अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्यैकोनविंशमहाधिवेशनमागामिदीपावलिमङ्गलावसरे** (१९४७ आक्तोबरमासे) **भारतप्रधानायां मुम्बापुर्यां महता समारोहेण भविता** ।

इदमधिवेशनमन्याधिवेशनतोऽधिकमाकर्षकमुपयुक्तं चिरस्मरणीयं च स्यादिति विचारेण सम्मेलनेनानेन समम्—

**अ. भा. संस्कृतसासाहित्य—विज्ञानप्रदर्शिन्या** आयोजनं विधीयेत । अस्यामायोजनायाम् आयुर्वेद—धनुर्वेद—ज्यौतिष—

दर्शन–नाट्य–संगीत–शिल्प–योग–कर्मकाण्डादिनां महत्वदर्शिनो विभागाः स्युः । प्रत्येकस्मिन् विभागे एतद्विषयकाणां प्राचीनतमानां हस्तलिखितानां ग्रन्थानां, शिलालेखानां चित्राणां च प्रदर्शनव्यवस्था क्रियेत । विषयेष्वमीषु कृतपरिश्रमाणां विदुषां वैज्ञानिकदृष्ट्या लिखितनिबन्धवाचनं—व्याख्याना—न्वेषणविचाराः प्रस्तुताः स्युः ।

अयि आर्यसंस्कृतिप्रणयिनः संस्कृतप्रेमिणश्च महाभागा' आगम्यतां भवाद्भिः साहित्यसम्मेलनाय । अलंक्रियतामाधिवेशनमण्टपम् । प्रसरीक्रियतां विज्ञानामोदः प्रदर्श्यतां संस्कृतविद्योन्नयनमार्गः । तर्प्यतां दिव्योपदेशामृताप्यायनेन । सफलीक्रियतामस्माकमायासः, तनुमनो–धनसाहाय्यं यावच्छक्ति, विधाय । प्रान्तीयसर्वकारोऽपि पावनतमे कर्मण्यस्मिन् सक्रियसहानुभूतिं दर्शयेयुरिति बलवद्विश्वसिमो वयम् ।

शास्त्रीयज्यौतिषकार्यालय
११६ कबूतरखाना
भूलेश्वर, मुंबई नं. २

निवेदकः
गोविन्दवल्लभशास्त्री
संयोजकः

---

# भारत—वर्षम्

ले.—फाटक पंढरीनाथशर्मा—( माथुरेयः (
विद्यामन्दिर, नारायणगांव.

चरीकर्ति बरीभर्ति संजरीहर्ति लीलया ।
मायावी सकलं विश्वं नमस्तस्मै परात्मने ॥१॥

अप्यहो सुक्ष्मेक्षिकया नीरीक्ष्यमाणे समग्रभूभागेषु सञ्जातगोर-गौरवः कोऽपि भूभागश्चेत्तर्हि **भारतवर्ष**–मेवेति नह्यविदितं ऐतिहासिकानाम् । यत्र गगनचुम्बितसमुत्तुङ्गशृङ्गः फलपटलास्वादनचपलचञ्चुकुलक्रमणाधिकनमित-शाखाशाखिव्यासः, रजतविजित्वरमहामहौषधीमण्डितमुकुटः सुन्दरकन्दरः

हिमालयः। यश्च पार्वतीरमणशिरोभूषायमाणा, सुधासुरसा भागीरथी भगीरथस्य पथप्रवर्तमाना, चरणक्षालनक्षमेव सेवते। कुत्रचित् ध्वनिध्वनितदिगन्तरः समुद्रः। क्वचित् सिंहव्याघ्रकरिगोमायुनृशंसश्वापदानां चीत्कारभयंकराण्यरण्यानि। कुहचित्—गंधर्वाङ्गनोपभुक्तानि परःसहस्रपुण्डरीकपटलपरिलसितानि सरोवराणि। कुहचन मूर्तिमती बिभीषिकेव वालुकामयी मरुभूमिः। क्वचित् अत्युन्नतप्रासादमण्डिता, विद्युच्चाकचक्यप्रसन्ना गतागतजनकोलाहलमयी नगरी। कुहचन शान्तिरसप्रधाना मुनिजनतपश्चर्यैकभूमिः। न केवलं निसर्गसौन्दर्यतयास्य भूमेः समुत्कर्षः किन्तु चतुर्दशविद्यायाश्चतुष्षष्ठिकलायाश्चाप्यधिष्ठानमत्रैव। अपि च युधिष्ठिरनलरामदुष्यन्तप्रमुखाः भारतस्वातन्त्र्यपोतकर्णधाराः राजकारणकुशलाः भूपालाः अत्रैव समुत्पद्य स्वयशसा दिगन्तरालं धवलीकुर्वन्तः निरन्तरं लोकानां स्मृतिपथमध्यासते। तथाच कालिदासभवभूतिदण्डीहर्षप्रमुखाः कविकर्मनिर्वहणप्राप्तकीर्तयः कवयः अत्रैव समभूवन्। येषां शृंगाररसरसायनकमास्वाद्य जितरागद्वेषो मुनिरपि युवरमणीवदनचुम्बनलालसाकुलः कल्पेत। यद्वैराग्यकवितामाकर्ण्य विषयाभिलाषी जनोऽपि विरज्येत। वीररसमाकलय्य म्रियमाणोऽपि युद्ध उत्तिष्ठत। किमधिकं वर्णनीयम्—पाणिनिकात्यायनपतञ्जलिप्रमुखाः **वैय्याकरणाः** कपिलवेदव्यासजैमिनिगौतमकणादगंगेशमुख्या दार्शनीकाः। चरकसुश्रुतदुर्गमाधवादयः चिकित्सकाः मनुयाज्ञवल्क्यपराशररघुनन्दनाग्रेसराः धर्मोपपदेशकाः आर्यभट्टलल्लटभास्कराचार्यादयः ज्योतिर्विदः। शंकराचार्यरामानुजाचार्यश्रीमध्वाचार्यवल्लभाचार्यादयः भारतधर्मप्रचारकः अमरमहेश्वरादयः कोषकाराः ज्ञानेश्वरतुकारामएकनाथप्रमुखाः परमभागवतधर्मविधिप्रवीणाः अत्रैवाविर्भूताः सर्वत्र कीर्तिं विस्तारयांचक्रुः। तथैव गांधीनेहरूसुभाषसावरकरप्रभृतयः स्वाराज्यान्दोलनप्रवर्तकाः बुद्धिशालिनः अखिलविश्वजनानामर्वाचीनानां शिरांस्यद्यापि सबहुमानं कम्पयन्ति। एतादृशं भारतवर्षं देवानामपि प्रियतमं पावनं च। यस्य च महिमानमुच्चैरुद्गायन्तः विमानारूढाः देवा गन्धर्वाश्च मकरन्दबिन्दुसन्दोहतुन्दिलानि महासौरभसमाकृष्टरोलम्बकदम्बानि सुमानि संववर्षुः। किमुव क्तव्यम्—यद्गौरवम् अनवरताकर्णनजात-

संस्कारमुखराः पक्षिणोऽपि वृक्षोर्ध्वमूले तिष्ठन्तः विद्यापतिविरचितगीतिमिव गायन्ति । किं मादृशेनाल्पमतिना वर्णनीयोऽस्य महिमा ।

आसीत् पुरा लोकोत्तरं वैभवं भारतवर्षस्य । निरीक्ष्यतां कदाचित् अस्मिन्नेव भारते वर्षे पुरा यायजूकैः राजसूयादयः यज्ञाः कृताः । कदाचिदिहैव वर्षातपसहानि कन्दमूलफलाशनानि तपांसि तप्तानि । इहैव भारते प्रतिपत्तनं प्रतिग्रामं, प्रतिखेटकं प्रतिसदनं, प्रतिमठं, स्वधर्ममनुतिष्ठन्तः जनाः भेरीराहत्य भारतधर्मस्य—जयमुद्घोष्य दिगन्तरमापूरयन् । गगनचुम्बिशृङ्गेषु भगवन्मन्दिरेषु सशंखवादमहोत्सवादिभिरुपायैरन्वभवन् अमन्दमानन्दम् । किन्तु निखिलमद्य संशयास्पदमेव । अधुनात्र भारते गर्हणीयं हत्याकाण्डं वृत्तपत्रेष्वनुवाच्य दन्दह्यते हृदयं शोकानलैः। प्रवहति चाश्रुधारा नयनाभ्याम्। कार्याकार्यविवेकविधुरा भवति च मतिः । हन्त पश्यतोः पित्रोः बालाः च्छुरिकाभिः कर्त्यन्ते । रुदतः पत्युः पत्न्यः यमसदनं प्रेष्यन्ते । सोढवि· विधबाधानां निरपराधानां दीनानां भारतीयानां हाहेत्यार्तध्वनिर्गगनतलमपि विदारयतीति श्रावंश्रावं हृदयं विदीर्यते न शक्यते सोढुम् ।

आसीदेकः समयः यत्र भारताभिजनैः अरिवक्षस्थलेषु असिलेखनीभिः भारतजयः क्रियासमभिहारेण व्यलेखि तत्र सर्वतन्त्रस्वतन्त्रस्यास्यैव समृद्धि-शालिनो देशस्य भारताभिजनानां च प्राप्तायाः दुरवस्थायाः अधोगमनस्य च कियती महतीयं पराकाष्ठा समजनि । यदि वयं भारतोद्धारणे न प्रयतिष्यामहे तर्हि अस्माकं भारते जन्मैव कलंकास्पदं स्यात् । तदधुना किमिति निद्रिता इव भवन्तः वृथा कालक्षेपं कुर्वन्ति । न किं भवन्तः पुरुषाः । खण्डितं राष्ट्रम्, अपहृतं जीवनं धनं च । निन्दिताः पितरः । बहिष्कृताः देशात् बलाददहनः देशभागः । प्रच्याविताः धर्मपथात् । अथैतादृशे समये किमस्माभिः कर्तव्यम् । अपि स्थातव्यं तन्द्राभिभूतैः । नहि नहि नायं समयः कालक्षेपस्य दुःखदुर्गतात् भारतमुद्धर्तुं कृतिरेवापेक्ष्यते । कृतिरेव हरेद्दैन्यमस्माकं न केवलं शुष्कालोचना, नापि सभापाटवम्, न तु विफला वाचालता, कथं

पुनरस्माकं भारतवर्षं प्राग्वैभवमियात्, कथं वाऽस्य भीकरं व्यसनं विनश्येदिति दिवानिशं चिन्तैवापेक्ष्यते भारतीयानां मनसि। यदि समृद्धिशालिनो देशस्य निखिलराष्ट्रव्यापिन्याः भारतीयसंस्कृतेश्च कृते प्राणत्यागस्यापेक्षा भवेत्तर्हि सप्रमोदं तत्कर्तुं बद्धपरिकरेण भाव्यम्। रक्षणीयञ्च भारतवैभवम्। किमस्माभिः न श्रुतानि वशीकृतात्मरिपुसमूहानां अर्जुनयुधिष्ठिरनलरामदुष्यन्तशिवभूपराणाप्रतापमहोदयानां कथानकानि। ये भारतस्वातन्त्र्यपोतकर्णधाराः क्षत्रियाः रणाजिरे प्राणानविगणय्य ररक्षुः भारतवैभवम्। न हि किल पुण्यभुवः कृते प्राणान् तृणायमन्यमानाः वीरवराः मृताः परिगण्यन्ते। किन्तु तेषां मरणमपि मण्डनं भवति।

अहह! प्रतिकूला एव ग्रहाः, विधिरेवानिष्टः भारतवर्षस्य। अन्यथा को नाम शक्तः स्यात् भारतस्योन्मूलने। सर्वानर्थमूलं भारतीयानां असंघटनमेव। अधुना संघशक्तेर्युगमस्ति तदुक्तः—"संघे शक्तिः कलौ युगे"

यदि नामाधुनाऽपि वा सपद्येव जागृत्य भारताभिजनाः संघटिता भवेयुः तद्वयं क्षणेनैव पारावारमपि मरूकुर्मः। तत्परविमर्दनन्तु को नाम कठिनो व्यापारः। यतः किल परस्परकलहो भिनत्ति संघसामर्थ्यम्। अतः "संगच्छध्वं संवदध्वं संवो मनांसि जानताम्" इति श्रुतिघोषितघोषणानुसारेण सर्वे मित्रभावेन मिलिताः सन्तः दुःखगर्ताद् भारतं पुनरुज्जीवयितुं प्रयतितव्यमिति नतेन शिरसाऽभ्यर्थये।

अयि भगवन्, कातःपरं प्रतीक्ष्यते दुर्दशा भारतवर्षस्य। इमां भारतस्य दयनीयामवस्थां साक्षात्कृतवतः कस्य सचेतसस्य हृदयं दुःखानलेन न दन्दह्येत। अयि विश्वपालक, व्यर्थमेव निगमादीनां त्वद्विषयं महान् डिण्डिमरवः "यत् दुष्टान्नाशयितुं सतस्त्रातुं परमेशः अवतरतीति"। अयि विश्वंभर, अपि शोभते ते ईदृशमकारुण्यं भारतभूमेरुपरि? अयि ईश्वर, कदाऽसौ सुदिनः समुदेष्यति यस्मिन्दिने त्वमिमां पुण्यभुवं सर्वतो महत्सौभाग्यशालिनीं स्वतन्त्रां नैकरत्नां वसुन्धरां याथार्थ्यनाम्नीं विधास्यसीति। शम्



॥ श्रीहरिः ॥

# मुम्बई नगरे
# अखिल भारतीय
# संस्कृत साहित्य सम्मेलनम्
## तदीया विज्ञानप्रदर्शिनी च
तयोरियम्
## रूपरेखा ।



अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्यैकोनविंशतितममधिवेशनमस्मिन्नब्दे दीपावलीमहोत्सवावसरेऽत्र मोहमय्यां सम्पत्स्यते। सम्मेलनेऽस्मिन् भारतस्य विभिन्नेभ्यो भागेभ्यो धुरन्धराः संस्कृतसाहित्यविद्वांसो, महात्मानो, योगिनो, वैदिकाः, कर्मठा, आयुर्वेदाचार्य्या, धनुर्वेदाचार्य्याश्चान्येऽपि संस्कृतसाहित्यकलाकोविदाः सम्भूय स्वेषु स्वेषु विषयेषु व्याख्यान-सम्वाद-शास्त्रार्थचर्चाभिस्तत्तद्विषयकैर्लेखैश्च संस्कृतसाहित्ये निगूढं ज्ञानं, विज्ञानञ्च राष्ट्रोन्नत्यै प्रचारयन्तो भारतीयसंस्कृतेश्च पुनारक्षणाय प्रकाशमानेष्यन्ति संस्कृतभारतीमाहात्म्यम् ।

पुरा भारतीयाश्चिकित्सकाः शस्त्रछिन्नान्यप्यङ्गानि सन्धातुं प्राभूवन्, रसायनशास्त्रिणः खगवद् वियति विचेरुः पारदविज्ञानबलेन, विस्मापयाञ्चक्रुश्च लोकचक्षूंषि भारतीयाः शिल्पशास्त्रिणः, विस्मयोपहतान्यापादयामासुर्जनानां चेतांसि विचित्रशस्त्रास्त्रहस्तकौशलप्रदर्शनेन समराङ्गणेषु वैज्ञानिका भारतीया योद्धारः, महर्षयो वायुयानान्याविश्चक्रुर्विरचयामासुश्च तत्तन्निर्माणविषयकान् ग्रन्थान् महापोतैर्व्यापारिणो महोदधिमुत्तेरुः प्रचारयामासुश्च भारतीयम्विज्ञानन्देशान्तरेष्वपि ।

आः ! केदानीन्तद्विज्ञानम् ? क ताः कलाः ? क तच्छिल्पम् ? क तानि शास्त्राणि ? क तानि अग्न्यस्त्रमेघास्त्रपर्व्वतास्त्रमोहनास्त्रनारायणास्त्रपाशुपतास्त्रब्रह्मास्त्राणि ? क तच्चिकित्सितम् ? क च तेषां तानि तानि ग्रन्थरत्नानि ?

हन्त ? तदेतत्सर्व्वमस्माकं संस्कृतसाहित्यग्रन्थाकरेष्वद्यापि सुरक्षितं तिष्ठतीति जीवामः । परमिदानीमशेषस्य तस्य साहित्यस्य विज्ञानपद्धत्याऽन्वेषणमेकत्रकरणञ्चावश्यकमापतितङ्कर्त्तव्यम् ।

अतोऽनेन सम्मेलनेन सहानुगामिन्येव सविशेषयोजना **"प्रदर्शिनी"** चापि संयोक्ष्यते ।

प्रदर्शिन्यामत्र संस्कृतसाहित्यप्रसिद्धा, भारतीया, **"प्राचीनसाहित्यविज्ञानसम्पत्"** सर्वसाधारणजनसमक्षमुपस्थापयिष्यते ।

तत्र भविष्यन्ति पृथक्पृथगनेकशो विभागाः । तेषु तेषु विभागेषु तत्तत्सम्बन्धिनः प्रकाशिता **अप्रकाशितास्ताल, भूर्ज, ताम्रपत्र, शिला, कर्गलादिष्वङ्किताः** प्राचीनतमाग्रन्थाः, अप्राप्याणां विदेश ( जर्मनी ब्रिटेनादि ) स्थानाम्पुस्तकानां नामसूचयः, तदीयं वैशिष्ट्यञ्च **वैज्ञानिकपद्धत्या** वस्तुप्रत्यक्षनिदर्शन–निबन्धलेखन–व्याख्यानैः प्रदर्शयिष्यन्ते । यथा—

## १ वेदविभागः

**प्रदर्शने**—(१) ऋग्यजुः सामाथर्वणां चतुर्ण्णामपि **वेदानां संहिताः** । ऋग्वेदस्य २१, यजुषः १०१, साम्नः १०००, अथर्ववेदस्य १३, शाखाः । तासु प्राप्तानां प्रत्यक्षं दर्शनम् ! अप्राप्तानामुपलब्धयेऽन्वेषणोपक्रमः ।

(२) **वेदभाष्याणि**—उपलब्धानां भाष्याणां प्रत्यक्षदर्शनम् । अनुपलब्धानां **रावणकृतवेदविज्ञानभाष्यादीना**मुपलब्धये ऽन्वेषणादिरुपक्रमश्च " ।

(३) **ब्राह्मणग्रन्थाः**—मूलमात्रम्, तेषां टीकाश्च ।

(४) **विशिष्टसाहित्यम्**—भारतीयासु भाषासु वैदेशिकीषु च तासु वेदानां वैज्ञानिकत्वप्रतिपादकं साहित्यम् ।

**सम्मेलने**—वेदविषयकाणां वैज्ञानिकदृष्टिकोणरचितानां निबन्धानां पाठाः, व्याख्यानानि च तथा सर्वमान्यानां वेदविदुषामुपाधिदानेन सम्मानः ।

## २ कर्म्मकाण्डविभागः ।

**प्रदर्शने**—श्रौतस्मार्तभेदाभ्यां द्विधा भविष्यति कर्म्मकाण्डसाहित्यम् । तत्र साहित्यम्—आपूर्व्वमीमांसाग्रन्थेभ्यः साम्प्रतं प्रचलिताः समस्ताः कर्म्मकाण्डपद्धतयः श्रौत-गृह्यसूत्रादयो ग्रन्थाश्च । श्रौतस्मार्त-कुण्डानां प्रदर्शनम् । अश्वमेधादियज्ञेषु विहितकुण्डीयानां प्रतिकृतीनां चित्राणां च प्रदर्शनम् । भद्रमार्त्तण्डोक्तानाम्भद्राणां विविधैर्वर्णकैः कलामयरचनाप्रदर्शनम् । अश्वमेधादिषूपकरण-भूतानि प्रणीताप्रोक्षणीचमसादीनि पात्राणि तेषां ग्रहणविधयश्च ।

**सम्मेलने**—कर्म्मकाण्डीयाङ्गोपाङ्गेष्वोतप्रोतस्य विज्ञानस्य प्रख्यापकानामुत्तम-निबन्धानां पाठाः, + व्याख्यानानि, विशिष्टेषु विधिषु तथा-विधस्योपकरणस्य विज्ञानसिद्धं प्रयोजनप्रदर्शनञ्च ।

यथा—पुत्रेष्टियज्ञे पिप्पलकाष्ठमयान्येव पात्राणि कथं प्रयोज्यानि, नन्वास्ति पिप्पलतरौ किमपि सन्ततिप्रदायकं रसायनमिति ? "सर्व्वप्रथमं गणपतिः पूज्यः इत्यत्र ओंकारपूजाविज्ञानम् । स्वविषये प्रत्यक्षचमत्कारप्रदर्शकाणां विदुषां सम्मानः ।

## ३ योगविभागः ।

**प्रदर्शने**—अस्मिन विभागे राजयोगहठयोगयोर्विभिन्नाङ्गानां व्यावहारिकप्रयोग-प्रदर्शनम् । हस्ताङ्कितानां वा तद्विषयकग्रन्थानां प्रख्यापनम्, सिद्धयोगिनां योगासनस्थितानां चित्राणि, पाषाणप्रतिकृतयः, नेत्रधौतसूत्रादीनामुपकरणानां प्रदर्शनम् प्रयोगविधिश्च । लब्ध योगप्रतिष्ठानां सिद्धानां चरित्राणि च ।

**सम्मेलने**—योगमार्गप्रदर्शिताक्रियायाः स्वास्थ्यकरत्वम् । योगसमाधिसिद्धयः, तेनाध्यात्मोन्नतिश्चेत्यादिषु विषमेषु निबन्धपाठाः । तद्विदां व्याख्यानानि, भारतीयसिद्धयोगिमहापुरुषाणां दर्शनञ्च,

## ४ आयुर्वेदविभागः ।

**प्रदर्शने**—अष्टाङ्गस्यायुर्वेदशास्त्रस्य प्रत्येकाङ्गसम्बन्धिनां मूलग्रन्थानां स टीकानां वा तेषां हस्तलिखितानां वा प्रदर्शनम् । साम्प्रतं प्रकाशमागातानामुत्तमोत्तमानां वैद्यकसाहित्यपुस्तकानाञ्च प्रख्यापनम् ।

**उपकरणानि**—(क) लब्धपरिचयानामपरिचितानां वा वनौषधीनां प्रत्यक्षप्रदर्शनम्। तासां चमत्काराश्च ।

(ख) रसग्रन्थाः, रससिद्धावुपकरणानि यन्त्रादीनि, रसभस्मतत्सम्बन्धिनां योगानां वैशिष्ट्यप्रदर्शनञ्च ।

(ग) पुरातनभारतीयचिकित्साग्रन्थेषु शस्त्रक्रिया । तत्सम्बन्धान्यस्त्रशस्त्राणि, तेषां च पाश्चात्यैराविष्कृतानामिदान्तनानां समीकरणञ्च ।

(घ) आसवारिष्टसुरादिसाधनोपकरणानां प्रदर्शनञ्च ।

**सम्मेलने**—अष्टाङ्गस्यायुर्वेदस्यमहत्वम्, भारतीयनिदानस्यवैशिष्ट्यम् । वनौषधीनां चमत्काराः इत्यादिविषयेषु निबन्धपाठाः, विदुषां व्याख्यानानि च।

**Note**—भारतीयमेव रसायनशास्त्रं देशान्तरेषु प्रतिष्ठते इत्यत्र न कस्यापि विदुषो वैमत्यम् । तथापि भारतीया रसायनशास्त्रिणः साम्प्रतं विहितात्मानः सन्तीति ते सम्मेलनेऽत्र निमन्त्रणीयाः दानमानासनादिभिरुन्नेयाश्च ।

## ५ धनुर्वेदविभागः ।

**प्रदर्शने**—( साहित्यम् ) अप्राप्यप्रायस्य धनुर्वेदस्य ग्रन्थानामन्वेषणम् । तेषु ये जलस्थलवायुयानादीनां निर्माणविधयस्तेषां प्रख्यापनम् । अस्त्रशस्त्रकवचादीनां साधननिर्माणग्रहणसञ्चालनप्रकाराणां

प्रदर्शनम्, तत्रस्थ वायव्य-नारायण-पाशुपत-ब्रह्मास्त्रादीनामुपक्रमकौतुकम्, चक्रव्यूहरचनाविधिवर्णनादिकञ्च ।

**उपकरणानि**—पुरातनेतिहासप्रोक्तान्यस्त्रशस्त्रादीनि, प्राचीनकवचानि, व्यूहरचनाचित्राणि च । ऐतिहासिकभारतीयमहावीरैः परिधृतानामस्त्रशस्त्रकवचादीनां प्रदर्शनञ्च ।

**सम्मेलने**—प्राचीनयुद्धकलावर्णनम्, अस्त्रशस्त्रवायुयानादिसम्बन्धिवैज्ञानिकविचारणा विशिष्टानां निबन्धानां पठनम् । विदुषां व्याख्यानानि च भविष्यन्ति ।

**Note**—लब्धराजादेशाश्चेद्वयं सम्मेलननिर्मापितानामपि कतिपयास्त्रशस्त्रादीनां प्रत्यक्षप्रयोगान् दर्शयितुं प्रयतिष्यामहे । प्राचीनसंस्कृतसाहित्याधारेणास्त्रशस्त्रादीनां निर्माणविदां विदुषां प्रोत्साहनार्थं दानमाना सनादिकमप्यायोक्ष्यते ।

## ६ ज्योतिषविभागः ।

**प्रदर्शने**—(१) ( साहित्यम् ) त्रिस्कन्धात्मकस्य, साङ्गोपाङ्गस्य ज्योतिष शास्त्रस्य प्राचीनतमाः प्रकाशिता अप्रकाशिता भूर्ज-ताड-ताम्र-कर्गलपत्रेषु शिलासु चाङ्किता ग्रन्थाः ।

**उपकरणम्**—(२) शङ्कुनिर्माणादारम्भ ग्रहवेधं यावत्साधनोपयोगीन्युपकरणानि । जयपुरादिनगरस्थासु वेधशालासु स्थितानां वेधयन्त्राणां संक्षिप्ताः प्रतिकृतयः ( मोडल ) इन्दौर-मथुराप्रमृतिनगरेषु प्रसिद्धानां ज्योतिषिकानां गृहे सुरक्षितानि धातुनिर्मितानि यन्त्राणि । तथाच तुलनात्मकदृष्ट्या समालोचनार्थं ग्रीनविच-वेधशालाया यन्त्राजातप्राप्तयेऽप्युपाया आयोक्ष्यन्ते ।

**सम्मेलने**—(१) ज्योतिःशास्त्रस्योपादेयता, ग्रहवेधार्थं संशोधनपूर्व्वकं भारतीय-पञ्चाङ्गानामकेवाक्यतादिविषयेषु निबन्धपाठाः । विदुषां वाख्यानानि । सम्मेलनाधिवेशनसमय एव प्रत्यक्षज्योतिषशास्त्रीय चमत्कारोपस्थापकानां विदुषां दानमानादिभिः सम्मान योजना च ।

## ७ इतिहास-पुराणविभागः ।

**प्रदर्शने**—(१) ( साहित्यम् ) रामायण-महाभारत-श्रीमद्भागवतादिग्रन्थानां प्राचीनतरा हस्तलिखिता दर्शनीयाः प्रतयः । इतिहासपुराण सम्बन्धिनः ताम्रपत्रप्रस्तरादिष्वङ्किता लेखाः, धातुमुद्राश्च ।

**उपकरणम्**—(२) इतिहासपुराणेषु वर्णितस्य भारतस्य तत्तत्कालिकानि मान चित्राणि, ततः परमिदानींतनं साङ्गच्छेदं भारतस्य मान चित्रम्, अवताराणां कलामयानि चित्राणि च ।

**सम्मेलने**—(१) भारतीय संस्कृतेः शिक्षकानां सन्मार्गदर्शकानामितिहास-पुराणानामुपादेयता, तेषां गौरवम्, तदीयं वैज्ञानिकत्वम्, इत्यादिविषयेषु निबन्धपाठा व्याख्यानानि च ।

(२) भारतस्याङ्गच्छेदो दुष्करः, कल्पितच्छेदस्य दूरीकरणोपायाः इत्यादिविषयेषु विवेचनश्च ।

## ८ स्थापत्यम् शिल्पकलाविभागः ।

**प्रदर्शने**—(१) साहित्यम्— स्थापत्यकलाविषयकाः प्राचीनतरा हस्तलिखिता मुद्रिताश्च ग्रन्थाः, शिल्पशास्त्रीयलेखाः, पारिभाषिकशब्दकोष-प्रभृतयः ।

**उपकरणानि**—(२) स्थापत्यकलोपयोगिपुरातननिबन्धेषु वर्णितानां वस्तू-नाञ्चित्राणि, यन्त्राणि, सम्प्राप्तान्यन्यानि साधनानि च । प्राचीनभारतीयस्थापत्यद्योतिकाः समुत्कृष्टाः प्रतिकृतयः, मूर्तयः, पात्राणि, तथा सोमनाथ, धारापुरी, पालिताना, आबू, गिरिनार....प्रभृतिषु स्थितानां जैनबौद्धशैववैष्णवादिमन्दिराणां मध्येऽङ्कितानि कलामयानि चित्राणि च ।

**Note**—भारतीयसंस्कृतेः प्रदर्शनार्थं प्राचीनभारतीयकलावशेषाणां तक्ष-शिलादिनगराणां, जैन-शैव-बौद्ध-वैष्णवमन्दिराणाञ्च सर्वाङ्ग-पूर्णं रजतपटलं ( फिल्म ) निर्माप्य सम्मेलनसमये प्रयोक्ष्यत इति सम्भावयामहे ।

सम्मेलने—(१) विश्वस्मिन् भारतीयकलाया महत्वम्, ऐतिहासिकत्वम्, तदीय-वैशिष्ट्यञ्चेत्यादिविषयेषु निबन्धपाठाः, विदुषां व्याख्यानानि च ।

(२) भारतीयस्थापत्यकलास्वर्हन्तमानामुत्साहवृद्धये दानमानादिव्यवस्था च ।

## ९ नाट्यसङ्गीतविभागः ।

प्रदर्शने—(१) साहित्यम्—गान्धर्वोपवेदादारभ्य नाट्यसङ्गीतविषयकाणि यावन्मात्राणि प्राप्यानि पुस्तकानि, तथैतत्कलसम्बान्धिनो लेखाश्च ।

उपकरणानि—(२) प्राचीनेषु काव्यनाटकग्रन्थेषु तदातन चित्रेषु च प्रदर्शितानि नृत्यगीतवाद्यचित्राणि वस्तूनि च ।

(३) संस्कृतनाटकेष्वेकतमस्य कस्यचन नाटकस्याभिनयोऽपि प्रयोक्ष्यते ।

सम्मेलने—(१) सङ्गीतसम्मेलनस्यायोजनम्, शास्त्रपद्धत्या सङ्गीतेन गीतेन स्वास्थ्यलाभः, योगसाधनाचेत्यादिविषयेषु व्याख्यानानि – ।

(२) सामवेदीय वामदेव्यविभागं प्रत्यक्षं प्रदर्शयितुः सम्मानम् ।

## १० कलाविभागः ।

प्रदर्शने—विभागेऽस्मिन् पुरातनभारतीयभित्तिचित्राणि, कलामयानि कर्गलचित्राणि, हस्तलिखितग्रन्थस्थितानि चित्राणि, शोभनानि, वस्त्राणि, भूषणानि, केशविन्यासाः, शृङ्गारप्रकाराणां निदर्शनानि, पटादिषु विहितानां हस्तकलाकौशलस्य कौतूहलमयं प्रदर्शनञ्च भविष्यति ।

सम्मेलने—कलाविषयमधिकृत्य विदुषाम्भाषणानि ।

## ११ अध्यात्मविभागः ।

प्रदर्शने—विभागेऽस्मिन् ज्ञानं, कर्म उपासना, चेति त्रयो भेदा भविष्यन्ति । समस्तानामुपनिषदां, गीतायाः ब्रह्मसूत्रस्य च भाष्योपेताः

प्रतयः । मुख्यतमानां सम्प्रदायानां सिद्धान्तग्रन्थाः चित्राणि च स्थानमलङ्करिष्यन्ति ।

**सम्मेलने**—आक्षेपरहितानि वैज्ञानिकसिद्धान्तानुस्यूतानि विदुषां व्याख्यानानि निबन्धपठनानि वा विभागेऽस्मिन् भविष्यन्ति,

## १२ शिक्षाविभागः ।

**प्रदर्शने**—(१) साहित्यम्—विभागेऽस्मिन् व्याकरणादिग्रन्थानां प्राचीनतमाः प्रतिलेखाः समाविष्टा भवेयुः ।

(२) शिक्षणलेखनव्याख्यानप्रचारैः सुरभारतीसेव्यमानानाममरपदवीञ्जुषमाणानां विद्वन्मान्यानाञ्चित्राणि चरित्राणि च समाविष्टानि स्युः ।

**सम्मेलने**—(१) "संस्कृत ( नागरी ) लिपेर्वैज्ञानिकता" "संस्कृतभाषाया वैज्ञानिकता" "ज्ञानविज्ञानयुता सेयममरा भारती" "यतोऽभ्युदयानिःश्रेयससिद्धिः सेयममरभाषा" "संस्कृतभाषाऽखिलभाषानाञ्जननी" "संस्कृतपारसीकभाषयोस्तुलनात्मकदृष्टया-विचारः" "पारसीकानां निन्दावस्ताग्रन्थः, ऋग्वेदश्च" "संस्कृतभाषाऽसीत्पूर्वं राष्ट्रभाषा साम्प्रतमपि तथैव भवितुमर्हति" "संस्कृतभाषाकथमर्थकरी स्यात्" "वैज्ञानिकरीत्या संस्कृतभाषाया पठनं पाठनञ्च" "भारतीयानां गृहेगृहे संस्कृतभाषायाः प्रचारोपायाः" "संस्कृतग्रन्थेष्ववस्थितस्य विज्ञानस्यान्वेषणम्भारतीयराष्ट्रस्य भारतीयसंस्कृतेश्चकल्याणकरमित्यादिविषयेषु निबन्धपाठाः, व्याख्यानानि च भवेयुः ।

मुम्बईनगरे भाविनोऽधिवेशनस्यास्य साफल्यं मुख्यतः शिक्षासम्मेलनाधीनमितिनिष्कर्षः । एतदर्थमखिलजगन्मान्यां वैज्ञानिकीं कामपि योजनामुपस्थापयितुरुपाधिदानादिना सम्मान-समारोहश्च ।

# अखिल भारतीय संस्कृतसाहित्यसम्मेलनम्

## अयि भारतभारतीयहितैषिणः !!!

यदि काम्यते भारतस्य सुरभारत्याश्च समुन्नतिः ! सम्मानं ! भारतीय-संस्कृतेश्च संरक्षणं ! तर्हि अविलम्बितं विनिश्चीयतामास्मिन्देववाणीमहायज्ञे स्वकीय-सेवासहयोगयोः प्रकारः परिणामञ्च ।

### स्वीक्रियतां स्वागतसमितेः सादस्यम्

(१) स्वागतसदस्यानां षट् श्रेणयो वर्तन्ते । संरक्षकः ५०१, आश्रय-दाता २५१, पोषकः १०१, सहायकः ५१, विशिष्टसदस्यः १०, साधारण-सदस्यः ३, रूप्यकाणि दत्वा भवितुमर्हति कश्चनापि संस्कृतहितैषी ।

दशसहस्रेभ्योऽन्यूना मोहमयीप्रान्तीयाः स्वागतसदस्या अपेक्ष्यन्ते ।

(२) अस्मिन्कर्मणि अर्थस्यावश्यकता तु वरीवर्त्येव परं ततोऽप्यधिका-वश्यकता प्रदर्शनस्य विभिन्नेषु विभागेषु संस्थापनयोग्यानां वस्तूनां ग्रन्थानाञ्चास्ति ।

श्रीमद्भिरेतदर्थं किमपि वस्तुजातं दातुं दापयितुं वा शक्यते चेत्तेषां वस्तूनां ग्रन्थानाञ्च सूची प्रदर्शनविभागाध्यक्षमहोदयेभ्यः ( प. श्री. रणछोड-लाल ध. ज्ञानी M. A. काव्यतीर्थ क्यूरेटर प्रिन्स आंफ वेल्स म्यूजियम बम्बई ) कार्यालयाय वा सम्प्रेष्या ।

संस्कृतसाहित्यसरणिमनुसृत्य विज्ञानपद्धत्या कस्मिन्नपि विषये ये खलु प्रत्यक्षप्रयोगकर्तारः स्युस्तैः स्वयमेवात्र कृपया लेख्यम् । अथवा एतादृशानां महानुभावानां प्रत्यक्षः प्रयोगो यैर्दृष्टः श्रुतो वा तैस्तेषां स्थानसङ्केतादिकं सम्प्रेष्य दातव्योऽस्मिन्कर्मणि सहयोगः कृपया ।

(३) एतदतिरिक्तं श्रीमन्तः शारीरिकीं सेवां प्रदायापि कार्यालयकार्येषु साहाय्यं दातुमर्हन्ति ।

(४) तत्त्वमिदमेव यत् स्वतन्त्रभारतस्य समुन्नतिमूलायाः संस्कृतभाषायाः सेवायै शरीरं, धनं, मनश्च प्रदीयताम् । प्रत्येकस्यास्ति आवश्यकता । अधोऽङ्कितेभ्यः प्रस्तावेभ्यः अस्माकं प्रवृत्तीनामवगमः स्यान्तासां पूर्त्यै श्रीमद्भिः साहाय्यं दातुं शक्यते । यथा

**प्रस्तावः १**

भारतस्य मध्यस्थसर्वकाराय, भारतीयसमस्तप्रान्तीयसर्वकारेभ्यश्च सानुरोधं विनिवेद्यते यत् राष्ट्रस्य समुन्नत्यै राष्ट्रस्य विकासार्थश्च या या योजनाः श्रीमद्भिः क्रियंते तासु संस्कृतसाहित्यस्य समुन्नत्यै संस्कृतसाहित्यस्यान्वेषणाय च प्राधान्यं प्रदीयतामिति । यतो भारतीयसंस्कृतेर्मूलं संस्कृतसाहित्यमेवास्ति । **विश्वस्मिन्विश्वे अद्य यज्ज्ञानं भौतिकं विज्ञानञ्च दरीदृश्यते तत्सर्वं ततोप्याधिकं संस्कृतसाहित्ये नितरां संभृतं विद्यते ।**

**प्रस्तावः २**

मोहमयीप्रान्तीयसर्वकाराय सानुरोधं विनिवेद्यते यत् मोहमय्यां सम्भविष्यतः संस्कृतसाहित्यसम्मेलनस्याधिवेशस्य अ. भा. सं. सा. विज्ञानप्रदर्शनस्य च साफल्याय आर्थिकीं, बौधिकीं, व्यावहारिकीं सहायतां प्रदाय भारतस्य भारतसंस्कृतेश्च समुन्नत्यै सुतरां साहाय्यं प्रदीयताम् ।

स्वागतसमितिकार्यालयः,
११६, सागरभुवनम्,
भुलेश्वरः, कबुतरखाना,
मुंबई २.
फोन नंबर २८४४५.

निवेदकः,
**गोविन्दवल्लभः शास्त्री,**
संयोजकः

# सम्मेलनस्य प्रकीर्णाः समाचाराः ।

मारतप्रसिद्धपरमोदारविद्वन्मान्यपूज्यपाद श्री १०८ गो. श्री. दीक्षितजी बाबामहाराजानामाध्यक्ष्ये स्वागतसमितिः स्वीयं कार्यं सोत्साहं विदधाति । विचार्यते यत्स्वागताध्यक्षमहोदयैः सदृशः कोपि विद्वान् धर्माचार्य एव सम्मेलनाध्यक्षपदे निर्वाचितः स्यादिति । एतदर्थं भारतयूरोपामेरिकादि देशेषु प्राप्तप्रतिष्ठानां जगद्गुरुश्रीभारतीकृष्णतीर्थमहाराजानां नाम प्रस्तूयतेऽस्माभिः ।

माननीय जस्टिस लोकूरमहोदयसदृशैर्विद्वद्भिःसमलङ्कृतेन दक्षिणभारतीयसंस्कृतसाहित्यसम्मेलनेनास्यां स्वागतसमितौ स्वस्य समावेशार्थं स्वीयाध्यक्ष सर्वतन्त्रस्वतन्त्रविद्यामार्तण्ड प. श्रीमाधवाचार्यशास्त्रिद्वारा सूचना प्रहिता वर्तते । या स्वीकृतैव सादरं समित्या । प. श्रीमाधवाचार्यशास्त्रिणा सहायकसंयोजकपदं स्वीकृत्य कार्यस्य समारम्भोप्यकारि । तेषां संस्थायाः कार्यक्षेत्रे मोहमध्या अपि समावेशोस्ति दक्षिणभारते मोहमय्या परिगणनमस्तीति ।

प. श्रीरणछोडलालजी ज्ञानी ( एम्. ए. काव्यतीर्थ ) महाभागैः प्रदर्शनस्य सफलतायै बहुप्रयत्यते । तत्रभवद्भिः भारतीयान्यदेशस्थैश्च पुस्तकालयैः संग्रहालयैर्विद्वद्भिश्च साकं पत्रव्यवहारादिकं कार्यं शोभनमारब्धं वर्तते ।

साम्प्रतं स्वागतसमितेः कार्यालयः स्वर्गीय प. रामचन्द्रशास्त्रिणः संस्कृत प्रचारकविद्यालये ( ११६, सागरभवनम् भूलेश्वर मुंबई २ ) वरीवर्ति । परञ्चातः परं कार्यसौकर्याय के. एम्. मुनशीमहोदयानां भारतीयविद्याभवने तस्य परिवर्तनं विधेयमिति विचारः प्रचलति । तदर्थमनुमतिस्तु भवनसमित्या प. श्रीसीतारामजी चतुर्वेद ( सा. आ. M. A. ) द्वारा प्राप्तैव ।

शिक्षाविभागस्योत्तरदायित्वे प. श्रीश्यामानन्दझामहोदयेन स्वीकृतं वर्तते । प. श्रीदीक्षितारशास्त्रिमहाभागाः पं. श्रीशिवनाथजी शास्त्रिणश्चास्मिन् कर्मणि

संलग्नाः सन्ति। आयुर्वेदविभागे (कार्यालयस्थान्येषु कार्येषु च) प. श्रीरामस्वरूपशास्त्रिणः सावधानं चेष्टन्ते। प. श्रीयादवजी त्रिकमजी आचार्य महोदयानां यात्रातः समागमनानन्तरमायुर्वेदविभागे सविशेषं किञ्चित्कर्तुं पार्येत। मन्त्रिमण्डलस्यान्ये सदस्याः श्री प. नागेशजी पाण्डेयः प. श्रीसरयूप्रसाद उपाध्यायमहाभागाश्च यथायोगं साहाय्यं प्रददत्येव। प. श्रीहीरालालपञ्चोली, प. श्री अमृतलालशास्त्री आचार्य, प. श्रीगौरगोपालजी शर्मप्रभृतयो विद्वाँसः कार्यकारिणीसदस्याः स्वागतसमितेः साहाय्यार्थे सर्वदा सर्वथा बद्धपरिकरा एव। प. श्री अजितजीशर्ममहोदयानामप्रतिमं साहाय्यं कथं विस्मर्तुं शक्यते। प. विमलशङ्करशास्त्रिणो नाम्नः समुल्लेख आवश्यकः यैरद्य यावत् सम्मेलनसम्बन्धिषु सर्वेषु कार्येषु सहयोगः प्रादायि प्रदीयते चेति।

---

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्ग्लमासप्रथमसप्ताहे प्रकाश्यते

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मकालेखाः प्रकटीक्रियेरन् सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन्। ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकचतुष्टयम् । अंकस्यैकस्याणकषट्कम् मूल्यम्। द्वीपान्तरवासिनां तु वार्षिकं मूल्यं पञ्चरूप्यात्मकम् । विना मूल्यमादर्शसंचिका न प्रदीयेत । तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पञ्चरूपकाणां दातारः सहायकाः दशरूपकदायिनः पोषकाः, पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्ता संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा विज्ञापनानि, समालोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादि सकलं मधुरवाणी कार्यालय बेळगांव नं १६९८ इति संकेतेन प्रेष्यम्।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव निस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

**प्राप्तिस्थानम्**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press, Belgaum, by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698, Belgaum.

Regd No B. 3664.

# PINK OINTMENT

खरूज २४ तासांत बरी होते

# पिंक मलम

तोंडावरील तारुण्यपिटिका (मुरुम)
डोक्यांतील फोड, इसब व त्वचारोगांसाठीं
सुगंधीत मलम

याने कपडे खराब होत नाहीं

सल्फनमाईड, मर्क्युरी, कॅम्फराझिंक
आणि होसूर चंदन तेलांत
बनविलेले
पिंक मलम

**स्टार कंपनी बेळगांव.**